

# शतकत्रयम्



प्रणेता

पण्डितश्रीशिवजी-उपाध्यायः

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

( मानित विश्वविद्यालयः )

नई दिल्ली

VIDYĀPĪṬHA-GRANTHAMĀLĀ

[ Vol. 2 ]

# ŚATAKATRAYAM

*FOREWORD BY*

**PROF. VACHASPATI UPADHYAYA**

VICE-CHANCELLOR

*Composed & Edited by*

**PAṆḌITA ŚRĪ ŚIVAJĪ UPĀDHYĀYA**

Head, Dept. of Sāhitya

Sampurnanand Sanskrit University

VARANASI

*Translated by*

**PT. ŚRĪ DURGĀDATTA UPĀDHYĀYA**

Ex-Head, Dept. of Sāhitya

Samyukta Sanskrit Mahavidyalaya, Mirzapur

**NEW DELHI**

**1997**

*Published by :*
**Registrar,**
Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeeth
(Deemed University)
New Delhi-110 016

□

*Available at :*
**Publication Department**
Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeeth
(Deemed University)
New Delhi-110 016

□

First Edition—1000 Copies
Price—Rs. 75.00

□

*Printed by-*
**Mahakant Computers**
B. 18/14 Reori Talab
Varanasi-221 010

विद्यापीठ-ग्रन्थमाला
[ द्वितीयं पुष्पम् ]

# शतकत्रयम्

कुलपतेः प्रो० वाचस्पति-उपाध्यायस्य 'नैवेद्य'-पुरोवाचा
पुरस्कृतम्

*प्रणेता सम्पादकश्च*
**पण्डितश्रीशिवजी-उपाध्यायः**
साहित्यविभागाध्यक्षः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

*अनुवादकः*
**पण्डितश्रीदुर्गादत्त-उपाध्यायः**
साहित्यविभागाध्यक्षचरः
मीरजापुरस्थसंयुक्तसंस्कृतमहाविद्यालयस्य

नवदेहल्याम्

२०५४ तमे वैक्रमाब्दे १९१९ तमे शंकाब्दे १९९७तमे खैस्ताब्दे

*प्रकाशक: :*

**कुलसचिव:**

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

(मानितविश्वविद्यालयस्य)

नई दिल्ली-११० ०१६

□

*प्राप्ति-स्थानम् :*

**प्रकाशन-विभाग:**

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

(मानितविश्वविद्यालयस्य)

नई दिल्ली-११० ०१६

□

प्रथमं संस्करणम्—१००० प्रतिरूपाणि

मूल्यम्—७५.०० रूप्यकाणि

□

*मुद्रक: :*

**महाकान्त कम्प्यूटर्स**

बी० १८/१४ रेवड़ी तालाब

वाराणसी-२२१ ०१०

## अनुक्रमः

# नैवेद्यम्

शतकत्रयमिदं प्राक्तनमहाकविप्रणीतशतककाव्यपरम्परायां प्रवर्तमानमपि किमपि नावीन्यमाधुनिककथाकल्पनावस्तुवृत्तप्रवृत्तपरिवृत्तिमात्मन्यादधानमाकलितसन्दर्भविशेषेण सन्तनोतीति नूनमस्मै तन्मर्मविदो विद्वत्सचेतसः समावर्जितचेतसो भवेयुरिति सुदृढं विश्वसिमि।

अमुस्मिन् शतकत्रये प्राथम्येन निगुम्फितं **श्रीशक्तिशतकं** नाम। तत्र पराम्बिकायाः शक्तेर्विश्वत्राणप्रयोजनोद्दिष्टा विशिष्टभावसंश्लिष्टा स्तुतिः काञ्चन नूत्नामेव स्तोत्रपरिपाटीमुन्नयति। साम्प्रतिकविश्वशान्तिविद्रावकोद्भूतप्रभूततराधुनिकाणविकशस्त्रसम्भारा निखिलजगद्भयभारायमाणा निःशेषमानवध्वंसक्रियाधारा नूनमतिशयविद्युद्दामभूमाकाराः सन्तीति तेभ्यो भुवनजनरक्षणमत्यावश्यकमवश्यकर्त्तव्यतया परिचिन्त्य तदर्थमन्वर्थमर्थनीया परमेश्वरी महाशक्तिरेवात्र प्रस्तुता स्तुता च। महासुरत्वेन तेषां पारमाणविकास्त्राणां परिकल्पनम्, तन्निर्माणौपयिकप्रभावप्रदर्शनम्, पारस्परिकस्पर्धमानतच्छक्तिसंवर्धनम्, अहरहरुद्भूयमानभूयोभयोत्सर्जनम्, सततं सञ्जायमानशीतयुद्धप्रवर्तनञ्चेत्यादिविषयान् प्रस्तुत्येदं श्रीशक्तिशतकं प्रणीतमत्यन्तं जगदुपकाराय परमाणुशस्त्रसंहारापहाराय विश्वशान्तिसुखजनावनप्रसाराय च प्रभविष्यतीति ध्रुवमेतत्संस्कृतजगत्पक्षतः पारमाणविकशस्त्रोन्मूलनाय समग्राय विश्वस्मै प्रदीयमानं सारस्वतं सन्देशसूत्रमित्यहं प्रत्येमि। साङ्ग्लभाषानुवादमिदं सन्देशसूत्रं सर्वत्र विश्वस्मिन् तेषु तेषु निखिलेषु राष्ट्रेषु प्रचारणीयमित्यवश्यमेतेनास्य सार्वभौमिकं सार्थक्यं जगद्धितं च स्यादित्यवैमि।

शतकत्रयेऽस्मिन् द्वितीयं शतकम् **आनन्दमयीमातृशतकम्**, यस्य संक्षिप्तं नामानन्दशतकमिति। अत्र नामानुरूपं विंशतिशताब्द्यां साक्षादक्षिसात्कृता तपोमूर्तिर्मनुजनुःफलपूर्तिर्विशद-विपुल-विश्वव्याप्तोज्ज्वलकीर्तिर्माताऽऽनन्दमयी वस्तुत आनन्दनिस्यन्दिनी भक्तजनमनोनन्दिनी निखिललोकानन्दजनन्यजनि जगत्कल्याणायेति तस्याः कल्पनोपेतं सारात्मकं जीवनवृत्तं तपश्चर्याचरणं लोकभ्रमणप्रेष्ठं चेष्टितं साक्षात्कृतपरमात्मतत्त्वप्रकाशनोचितं समुदात्तचरितं च विविधैश्छन्दोविधानैरुपवर्णितं निश्चप्रचमाहरिष्यति भक्तिभावनाभावितान्तः-

करणानां भावुकानां विदुषां मनांसीति ममास्ति भूयान् प्रत्ययः।

किञ्चास्मिन् प्रक्रमे शतकत्रयस्यान्तिमं शतकं **कुम्भशतक**मिति नाम्ना सङ्ग्रथितम्। प्रतिवत्सरं तीर्थचतुष्टये जायमानं कुम्भपर्व विशिष्य तीर्थराजप्रयाग-पर्यवसितं किञ्चनातुलितमाध्यात्मिकवैभवमुन्मीलयति। तत्र कुम्भान्महाकुम्भप्रभूतिः परमपुण्यप्रसूतिः कल्पनाजन्यानन्यसुखानुभूतिः प्रसृततरप्रशस्तप्रकर्षभरप्रस्यूति-श्चेत्यादिविषयानुवृत्ता विविधाः प्रवृत्तयः कल्पनोपारूढा निरूढाः सिद्धाः प्रसिद्धाः परम्परिताश्च परितः प्रतिपादिताः सचेतसां चेतांसि समावर्जयितुं साकल्येन शक्ष्यन्तीति मे द्रढीयान् विश्वासः।

इत्थं श्रीशक्तिशतकम्, आनन्दशतकम्, कुम्भशतकमित्याहत्य शतकत्रयमिदं राष्ट्रभाषानुवादसहितं सम्यग् हितं सन्निधातुं समेषामधीतिनां सुमतिनां सुखबोधाय प्रकल्पेतेत्याशास्महे।

अस्मदनुजकल्पः काशीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागाध्यक्षः **पण्डितश्रीशिवजी-उपाध्यायो** बाल्यादेव काव्य-प्रतिभासमेधितो नैकानि काव्यानि सहस्राधिकानि ललितललितानि पद्यानि निर्माय सम्प्रति न केवलं काश्यां प्रत्युत संस्कृतकाव्यजगति परमां प्रतिष्ठाधुरीमधिराजमानोऽस्ति। एतेन प्रणीतात् शतकपञ्चकात् शतकत्रयं मया स्वीयसंस्थातः प्रकाश्यते। नूनमस्य कविवरस्योपाध्यायमहोदयस्य काव्ययशः सार्वदिक्कं प्रसरीसरेदित्यहं परमेश्वरमन्वहं प्रार्थये।

शतकत्रयस्यानुवादकः **श्रीपण्डितदुर्गादत्त-उपाध्यायो** राष्ट्रभाषयाऽनूद्य शतकत्रयमिदं नूनमुपाकरोद् राष्ट्रभाषाऽधीतिनो लोकान्। तदर्थमसौ विद्वत्कवि-सुहृद्वरः श्रीमदुपाध्यायमहाशयोऽस्मदशेषसाधुवादानर्हतीति। ग्रन्थस्यास्य यथाकालमुत्कृष्टमुद्रणार्थं वाराणसीस्थ-**महाकान्त-कम्प्यूटर्स**-व्यवस्थापकाय धन्यवादान् समर्पयन् ग्रन्थमिमं काव्यशास्त्ररसिकेभ्यः समुपहरामि।

**नवदेहल्याम्**
गुरुपूर्णिमायाम्,
वि०सं० २०५४

**वाचस्पति-उपाध्यायः**
कुलपतिः
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृत-
विद्यापीठस्य

# त्रिवेणी

इस विश्वविद्यालय के साहित्य विभाग के अध्यक्ष मनीषिप्रवर श्री शिवजी उपाध्याय द्वारा लिखित **'शतकत्रयम्'** का प्रकाशन श्री लाल-बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ (मानित विश्वविद्यालय), नई दिल्ली द्वारा किया जा रहा है, बहुत ही प्रसन्नता का विषय है। इस ग्रन्थ के साथ लेखक के रूप में **श्री शिवजी उपाध्याय** एवं इसके नैवेद्य-लेखक और प्रकाशन के प्रेरणास्रोत विद्वद्वरेण्य **डॉ० वाचस्पति उपाध्याय** तथा इसके अनुवादक के रूप में **श्री दुर्गादत्त उपाध्याय**, इन तीन उपाध्यायों के योगदान का संगम अपने आप में महत्त्वपूर्ण है। फिर भी कविशिरोमणि इसके कवयिता श्री शिवजी उपाध्याय ने अग्रज के रूप में मुझसे दो शब्द लिखने का आग्रह किया है, यह मेरे लिए सौभाग्य का विषय है।

लगभग ३० वर्ष पूर्व श्री शिवजी उपाध्याय से मेरा परिचय हुआ। यह सौभाग्य हमारे स्वनामधन्य गुरु स्व० श्रद्धेय **श्री पट्टाभिराम शास्त्री जी** के आश्रय में प्राप्त हुआ, जब वे उनसे साहित्य-शास्त्र का अध्ययन कर रहे थे। आचार्य श्री पट्टाभिराम शास्त्री जी ने मुझे जयपुर में, डॉ० वाचस्पति उपाध्याय जी को कलकत्ता में और श्री शिवजी उपाध्याय को वाराणसी में न केवल शिक्षा प्रदान की, अपितु एक पिता के रूप में संरक्षण भी प्रदान किया। हमारे गुरु का शिष्यों के साथ केवल पढ़ने-पढ़ाने का ही सम्बन्ध नहीं था, अपितु वे उनके सर्वविध अभ्युदय की चिन्ता करने के साथ-साथ अपनी सारी तपस्या, प्रताप और प्रभाव का उपयोग केवल उन्हीं के कल्याण के लिए करते थे। हम तीनों का यह सौभाग्य रहा कि हम इस प्रकार के गुरु की छत्रछाया में फले-फूले। आज हम तीनों जो कुछ भी हैं, वह केवल गुरुदेव के अनुग्रह और आशीर्वाद का परिणाम मात्र है। इस पुस्तक के साथ विद्यावंश के अनुसार हम तीनों बन्धुओं का यह संयोग केवल गुरुकृपा की त्रिवेणी है, ऐसा मैं मानता हूँ। इस दृष्टि से इस रचना के साथ हम लोगों का भावनात्मक सम्बन्ध है। इसके माध्यम से श्रद्धेय गुरुप्रवर **आचार्य श्री पट्टाभिराम शास्त्री जी** को स्मरण करने का अवसर मिला है, यह सोने में सुगन्धि का योग है।

आचार्य श्री शिवजी उपाध्याय अपने ओज, प्रताप तथा तेजस्वितासम्पन्न आकृति एवं उसी के अनुरूप विद्वत्ता और कवित्व-शक्ति से सम्पन्न हैं। परिचय के प्रथम दिन से ही इनकी विविध क्षमताओं को मुझे साक्षात् देखने का अवसर मिला है। एक उक्ति है—

**"विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः"।**

यह उक्ति अक्षरशः श्री उपाध्याय जी में चरितार्थ होती है। दर्शन जैसे गम्भीर विषय पर वे संस्कृत जैसी गभीर भाषा में रचना कर सकते हैं, साथ ही लोक की दहेज जैसी समस्याओं और परमाणु अस्त्रों के दुष्प्रभाव तक को अपनी रचना में उतार सकते हैं। यह सिद्धि केवल भगवती शारदा के अनुग्रह का ही फल हो सकती है। वे एक सफल वक्ता हैं, उत्तम अध्यापक हैं और लेखनी के धनी हैं, कविता तो उनकी सहचरी-सी प्रतीत होती है। इन तीनों शतकों में उनकी आध्यात्मिकता, दैवी शक्ति तथा भक्ति का समन्वय है। इनके प्रकाशन से भक्ति और स्तोत्र-साहित्य की श्रीवृद्धि हो रही है, यह इस विश्वविद्यालय के लिए भी गौरव की बात है।

मैं इस ग्रन्थ के प्रकाशन और इस पर नैवेद्य अर्पित करने के लिए बन्धुवर **डॉ० वाचस्पति उपाध्याय**, कुलपति, श्री लालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ (मानित विश्वविद्यालय), नई दिल्ली, का अभिनन्दन करता हूँ और हिन्दी अनुवाद के माध्यम से इसको सर्वजनसुलभ बनाने के लिए **आचार्य श्री दुर्गादत्त उपाध्याय** जी को बधाई देता हूँ। **आचार्य श्री शिवजी उपाध्याय** गुरु जी के शिष्यों में उनके साक्षात् मूर्त्तिमान् कीर्तिस्तम्भ हैं। उनकी यशःपताका नव-नव कृतियों के माध्यम से संस्कृत जगत् में लहराती रहे, यही भगवान् विश्वनाथ से प्रार्थना है।

**वाराणसी**
गुरुपूर्णिमा,
वि०सं० २०५४

**मण्डन मिश्र**
कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय

# सौशब्द्यम्

**सुधीभ्यः सूक्ष्मसंविद्भ्यः सुहृद्भ्यः शतकत्रयम्।**
**सानन्दमर्पये सद्भ्यः सौशब्द्यसुमनोऽञ्जलिम्।।**

अथेदं **'शतकत्रयम्'** सौशब्द्यसन्दर्भनिर्भरमपूर्वोपात्तपावनोपायनमिव सुधियां सुमनसां पुरः पुरस्कृतीकर्तुकामेन मया समुपन्यस्यते। निश्चप्रचमत्र त एव प्रमाणं सद्गुणाकलनैकस्वाभाव्यभव्यकाव्यधिषणा मनीषिणो ये परगुणपरमाणून् पर्वतीकृत्य मन्वाना निजहृदि विकसन्तः सन्तः सन्ति कियन्तोऽपीति।

शतकत्रयेऽस्मिन् **'श्रीशक्तिशतकम्'**, **'आनन्दमयीमातृशतकम्'** (आनन्दशतकम्), **'कुम्भशतकम्'** इति क्रमेण सन्निविष्टं प्रतितिष्ठति। तत्र **'श्रीशक्तिशतकम्'** नाम स्तोत्रसाहित्यपारम्परीमतिरिच्यमानं किमपि क्रान्तिकृन्नावीन्यमुन्मीलयज्जगदाह्वानपरमात्मीयमाहात्म्यमातनोति, साधारण्येनासाधारणमिदमुत्कटं विश्वसङ्कटकारिसत्यं प्रकटं प्रतीयते यद्यत्वे पारमाणविकशस्त्रसम्भारा भुवो भारायमाणाः समग्रसांसारिकप्राणिप्राणप्रणाशपरायणाः पर्यवतिष्ठन्ते, तन्निराकरणोपाया अहरहश्चिन्त्यमानाः कूटकपटपाटवप्रभावेण निष्फलीभवन्ति, केवलमस्य महाध्वंसकृत्सङ्कटस्य निदानं तत्त्राणप्रदानशरणमनन्यतममेका पराशक्तिरेव, सैव परिकल्पितान् महासुरसन्निभानिमान् परमाणुशस्त्रप्रकरान् पराहत्य सर्वान् प्राणिनः पातुं शक्नोतीति धिया मया प्रकृतशतकमिदं कृतम्। अत्र खलु परमाणुकासुरो लब्धावतारो नवः सन् विश्वं जिघांसति, तस्य वशानुगाः क्षिप्रगतयः क्षेप्यास्त्रासुराः प्रक्षेपयानासुराश्चानेके सन्ति प्राणिमात्रप्राणभयसन्तानविधायिनो मानवकुलद्वेषिणः, तेभ्यो जगतः परित्राणं कर्तुं कारयितुं वा साक्षात् पराशक्तिः पराम्बा विश्वस्मिन् प्रकटीभूय साधु-भक्त-सज्जनान् शरणापन्नान् निखिलान् परिरक्षतु–इत्याशयप्रकाशननिर्व्यूढमिदं 'श्रीशक्तिशतकम्' ध्रुवमुद्धुरमस्य सुरभारतीप्रणयप्रवणस्य जगतः पक्षतो निखिलस्यापि विश्वस्य शान्तिस्थापनार्थमावर्जनात्मकं समाह्वानमित्यस्य सार्वत्रिकप्रचारः सम्प्रति समपेक्ष्यते।

किञ्चान्यद् **'आनन्दमयीमातृशतकम्'** आनन्दशतकमित्यपरनामकं

नाम विश्वविश्रुतसत्कीर्तिशालिन्यास्तपोमूर्त्तिप्रकाशिन्याः सौजन्यधन्यवदान्यमनो-मनोज्ञसद्भावप्रभावप्रसविन्या मातुरानन्दमयीदेव्या देव्याकृतिदिव्यप्रभाप्रभासिन्या यशोराशिनामगुणेतिवृत्तप्रकाशिस्तवनं सकलमङ्गलभवनमिव तदनुरागितत्पद-रागिजगद्विरागिजनानामवनमवश्यमनुष्ठातुं शक्ष्यतीति नूनमाशास्महे।

तथेतरत् **'कुम्भशतकम्'** प्रतिवत्सरं तीर्थराजप्रयागपरिसरप्रसर-त्सरित्त्रयाधिकूलमायोज्यमानकुम्भमाहात्म्यवर्णनात्मकमशेषक्लेशनिःशेषकर-मातिशय्येन कल्पनापोढमालङ्कारिकोद्भावनारूढमनूढमिवान्यालीढमिव सरसरस-भावनिर्व्यूढमुद्भासते। याथार्थ्येतिवृत्तसहकृतदृश्यप्रपञ्चसञ्चितमौचित्यचारु-कमनीयकवनीयकर्म सकलशर्म प्रणिदधत् सचेतसां चेतःप्रसादनाय प्रभवतीति कस्यापि तद्विदो विपश्चिदपश्चिमस्य नास्त्यविदितम्। तदेतदेवाकूतमत्र काल्पनिक-काव्याध्वनि ध्वनितमुत्प्रेरयति कुतुकिनां मादृशानां कवयितॄणां तादृशकाव्यप्रति-मानमिति सुहृदो विदन्ति।

अपि चैतस्य शतकत्रयस्य प्रकाशनानुष्ठानप्रकल्पे प्रेरणाभुवो भूयोदयोदयदीप्तहृदो मान्यमान्या अस्मद्गुरुभ्रातृवराः संस्कृततत्प्रण-यिनामनन्योन्नायका अकारणकारुणिकाः सम्प्रति वाराणसीस्थ-सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य कुलपतयो **डॉ० मण्डनमिश्र**महाशयाः स्वीयशुभाशंसनं त्रिवेणीति नाम्ना प्रवितीर्येमं निजानुजमुपाकार्षुस्तदर्थमहं तान् प्रति प्रतिज्ञापित-सौहार्दहार्दभावभूयिष्ठो मुहुर्मुहुरानमन्मूर्ध्ना सप्रणति कार्तज्ञ्यमावेदयामि।

तथैतस्य शतकत्रयस्य प्रकाशनसौविध्यव्ययादिभारमनायासमेव निर्वोढुमग्रेसरीभूय भूयसा ममोत्साहं संवर्धयन्तो मदग्रजनिभा गुरुभ्रातरो दिल्लीस्थ-श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य (मानितविश्वविद्यालयस्य) कुलपतिपदमधिराजमानाः सहृदयोदारसौजन्यधन्यात्मानो माननीया **डॉ० वाचस्पति-उपाध्याय**महोदया यत्किञ्चिन्मत्काव्यकौशलप्रख्यापने-नाधिलोकमालोकयन्—इत्यहं तान् प्रति साञ्जलिप्रणमन्नाधमर्ण्यमात्मनीनं कोटिशो विज्ञापयामि। ग्रन्थादौ च **'नैवेद्यम्'** इति हृद्याभिधानेन विषयोपस्थापन-प्रकाशनकविकाव्यवैशिष्ट्यनिरूपणं श्रीमदुपाध्यायवर्यैरतिसुष्ठु व्यधायीति विबुधा विशदं विभावयन्तु।

इत्थञ्चास्य शतकत्रयस्य राष्ट्रभाषानुवादं सानन्दोत्साहनिर्विशेषमशेषेण संविधायास्मदभिन्नसुहृदः सहृदयकविमूर्धन्या मीरजापुरस्थशक्तिपीठ-

विन्ध्याचलपुरवास्तव्या वस्तुतोऽस्मच्छैक्षिकजीवनोन्नयने प्रेरणास्रोतांसि साहित्याचार्य**श्रीदुर्गादत्त-उपाध्याय**महेच्छा देवगिरोपनिबद्धं पद्यमयमिदं काव्यं सामान्यजनमान्यमकार्षुरित्यहं तेभ्योऽतिशयं साभिवादान् साधुवादानर्पयन् प्रमुदमावहामि। तदात्मजो **डॉ० शिशिरचन्द्र-उपाध्यायो**ऽपि तस्मिन् राष्ट्रभाषानुवादकर्मणि सुभृशश्रमेण तत्साहाय्यमन्वतिष्ठदिति तस्मै शुभाशीराशिं सम्प्रयच्छन् चतुरस्त्रं तदभ्युदयमभ्यर्थयामि।

एवञ्च ये केऽपि मुद्रणालयकर्मचारिणो मुद्रणकार्ये व्यापृता यथाकालमस्य ग्रन्थस्य मुद्रणं समपादयन् तेषां भूयोभूतिमभिवाञ्छन् विशेषतः सर्वविधं प्रकाशनसौकर्यं संविधातुं प्रयतमानं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनविभागस्य वरिष्ठकर्मचारिणं **डॉ० हरिवंशपाण्डेय**महं सौहार्देन शुभाशीर्वादेन संवर्धयामि येन सुबहु परिश्रम्य ग्रन्थस्य सुरुचिपूर्णं मुद्रणमाकलय्य शतकत्रयमिदं प्रकाशपथमुपनीतम्। अन्ते च-

**"सदस्तु वा वस्त्वसदस्तु वा तत्-**
**परीक्षणे सूक्ष्मधियः प्रमाणम्।**
**न वेत्ति रत्नं स्वयमात्मरूपं**
**विदन्ति तत्केचन तद्विदस्ते"**।।

इत्यावेद्य विस्तराद् विरमामि।

३, आचार्यनिवासः,
वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
गुरुपूर्णिमा, वि०सं० २०५४

**शिवजी-उपाध्यायः**
साहित्यविभागाध्यक्षः

# भूमिका

इस जगत् में जायमान चौरासी लक्ष योनियों में शास्त्रकारों ने मानवयोनि को ही सर्वश्रेष्ठ योनि प्रतिपादित किया है। मानवेतर अन्य सभी योनियाँ भोगयोनियाँ हैं, जिनमें केवल पूर्वजन्मकृत सुकृतों एवं दुष्कृतों के सत्फलों या दुष्फलों का भोग ही प्राणी भोगता है, स्वतन्त्र रूप से पुण्यकर्मों या पापकर्मों को बुद्धिपूर्वक करने में क्षम नहीं होता। केवल मानवयोनि ही ऐसी योनि है जिसमें विवेकपूर्वक जीव अच्छे या बुरे कर्मों को करने की क्षमता रखता है। अतः मानव शरीर की प्राप्ति ही प्राथमिक रूप से बड़ी उपलब्धि है। मानव शरीर प्राप्त होने के पश्चात् जिसके द्वारा पुण्यकर्मों या पापकर्मों का ज्ञान प्राप्त होता है उस विद्या की अधीति दूसरी बड़ी उपलब्धि होती है। तदनन्तर विविधविध विद्या मिलने पर भी कविता करने का सामर्थ्य प्राप्त करना तीसरी जैविक बड़ी उपलब्धि मानी जाती है। इसके बाद कवित्वनिर्माण की योग्यता प्राप्त करने पर भी प्रवाहमयी शैली में काव्यरचना करने की पात्रता के लिये अनेक जन्मों की काव्यकरणप्रवणता की प्राप्ति जिसके कारण हो पाती है उसे साहित्यशास्त्रीय भाषा में 'शक्ति' कहा जाता है। इस 'शक्ति' के अभाव में काव्यीय प्राणवत्ता नहीं आ सकती, अतः यह सुसिद्ध है कि चौथी सर्वातिशायिनी उपलब्धि 'शक्ति' शब्द से निर्दिष्ट की गयी है। अग्निपुराणकार की यह पंक्ति–

**''नरत्वं दुर्भभं लोके विद्या तत्र सुदुर्लभा।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा''।।**

मेरे उपर्युक्त कथन में प्रमाण है। वाग्देवतावतार आचार्य मम्मट ने अपने **काव्यप्रकाश** में उस ब्रह्मानन्दसहोदर रसभावसंवलित काव्यनिर्माणचणत्व में समूहालम्बनात्मक रूप से घट निर्माण के प्रति उपादानहेतु मृत्तिका, निमित्तहेतु चक्र, चीवर (डोरा), दण्ड एवं कुम्भकार की एकत्रीभूत कारणता की तरह शक्ति, लोक, शास्त्र, काव्यादि की अध्ययननिपुणता तथा सिद्धकवि के चरणों के समीप बैठकर काव्यरचना करने का अभ्यास इन तीनों की संश्लिष्ट कारणता मानी है–

**''शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे''।।**

इन तीनों कारणों में से एक भी कारण का अभाव किसी काव्यरचना में प्रकृष्टता नहीं ला पायेगा यह मर्म 'हेतुः' शब्द के एकवचनत्व से प्रमाणित है।

उपर्युक्त विवेचन से यह तथ्य पूर्णतः प्रमाणित हो गया कि इस संसार में ऐसा महाकवि और उसके द्वारा निर्मित उत्कृष्ट काव्यरचना मानवजीवन का महतोमहीयान् प्राप्तव्य है। जहाँ तक काव्य की उपादेयता एवं गुणवत्ता का प्रश्न है उसका समाधान साहित्यशास्त्र के अनेक चिन्तक आचार्यों ने अपने काव्यविवेचक सिद्धान्त-ग्रन्थों में विस्तार से निरूपित किया है। बहुत अधिक काव्यप्रयोजक वाक्यों को न उद्धृत कर केवल मम्मटाचार्य का काव्यप्रयोजनबिन्दु ही उद्धृत कर रहा हूँ–

**''काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे''।।**

कीर्ति, धन, व्यवहारज्ञान, अनिष्ट का तिरोधान, तत्क्षण (काव्यश्रवणपठनसमकाल में ही) अलौकिक परमानन्द की अनुभूति एवं कान्तातुल्य वैयञ्जनिक उपदेश, ये षड्विध प्रयोजन आचार्यचरण ने बताया है जो सर्वथा प्रमाणित है। कीर्ति या यश भी ऐसा जो कभी नष्ट न हो। महाकवियों का यशःशरीर चिरन्तन है। अस्थिचर्ममय शरीर तो एक निश्चित अल्पीयान् कालकीलित होता है, पर यशःकाय की न समयसीमा है न ही वार्धक्यजन्य क्षीणता। महामनीषी महाराज भर्तृहरि के शब्दों में–

**''जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशःकाये जरामरणजं भयम्''।।**

अर्थ, धर्म, काम एवं मोक्ष इस पुरुषार्थचतुष्टय की प्राप्ति भारतीय दार्शनिक मनीषियों ने मानव-जीवन की चरमोपलब्धि बतायी है। वेद, शास्त्र एवं दर्शनों की प्रज्ञासम्पन्नता से भी चतुर्विध पुरुषार्थ की प्राप्ति अवश्य होती है पर विधिनिषेधात्मक शास्त्रों की सघन अटवी में सामान्य मनुष्य भ्रमण नहीं कर सकता, उसमें तो परिपक्व मेधा वाले मनुष्य ही परिभ्रमण कर सकते हैं। सर्वसाधारण सुकुमारबुद्धि वालों के लिए तो काव्यमयी सरणि ही सहज सरल है। संख्या की दृष्टि से सुकोमलमनीषा के लोग ही संसार में अधिसंख्य हैं। प्रश्न उठता है कि सूक्ष्ममेधा के लोग

काव्य के मार्ग का अवलम्बन क्यों करें ? उत्तर होगा कि जब सरस रीति से काव्यपथ का आश्रय ग्रहण करने से ही पुरुषार्थचतुष्टय की प्राप्ति हो जाय तो कठोर और नीरस शास्त्रों के पथ का अवलम्बन कोई क्यों करे ? साहित्यदर्पणकार के शब्दों में–**''कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात् ?''** अतः यह सुतरां सिद्ध है कि सभी मनुष्यों के लिये काव्य ही सर्वथा ध्येय, ज्ञेय एवं उपादेय है। इस सिद्धान्त की पुष्टि में साहित्यदर्पणकार आचार्य विश्वनाथ की पङ्क्ति द्रष्टव्य है–

**''चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते''।।**

प्रस्तुत ग्रन्थ में **'शक्तिशतकम्'**, **'कुम्भशतकम्'** तथा **'आनन्द-शतकम्'** इन तीन शतकों का समायोजन किया गया है।

**'शक्तिशतकम्'** में लेखक पं० शिवजी उपाध्याय ने शक्ति की अधिष्ठातृदेवता अनन्तब्रह्माण्डजननी भगवती विन्ध्यवासिनी की भक्तिभावात्मिका स्तुति तो उपनिबद्ध की ही है, इसके साथ ही विश्व की महाशक्तियों के द्वारा महाविनाशकारी पारमाणविक शस्त्रों के निर्माण से होने वाले वैश्विक महाविनाश के प्रति गम्भीर चिन्ता भी प्रकट की है। पारमाणविक शस्त्रों के निर्माण की यह स्पर्धा इसी तरह यदि राष्ट्रान्तरों में गतिमती रही तो उसकी परिणति क्या होगी? यदि परमाणुशक्तिसम्पन्न राष्ट्र प्रक्षेप्यास्त्रों के माध्यम से अपने यहाँ बैठे-बैठे एक-दूसरे के ऊपर इन शस्त्रों का प्रक्षेपण करेंगे तो सम्पूर्ण जीव-जगत् का अस्तित्व ही मिट जायेगा। ध्वंसावशिष्ट वसुन्धरा में महाप्रलय की विभीषिका खड़ी हो जायेगी। अतः विध्वंसकारिणी यह परमाणुशक्ति की प्रतिस्पर्धा अविलम्ब समाप्त की जाय, यह सन्देश है 'शक्तिशतकम्' का। इसमें परमाणु शस्त्रों को महाराक्षसों के रूप में कल्पित करके उनके द्वारा सम्भावित विश्वविनाश से प्राणिमात्र की रक्षा के लिए परा शक्ति परमेश्वरी की स्तुति की गयी है, जो स्तोत्र-साहित्य की परम्परा में एक अभिनव स्तुत्य क्रान्तिकारी प्रयास है।

**'कुम्भशतकम्'** में तीर्थराज प्रयाग के त्रिवेणीसङ्गम पर लगने वाले महाकुम्भ पर्व का स्फीत काव्यात्मक वर्णन किया गया है। वहाँ उस

अवसर पर उपस्थित होने वाले नर-नारियों का वर्णन करने के साथ ही कुम्भस्नान से होने वाले आध्यात्मिक लाभ पर भी विशद प्रकाश डाला गया है। अखिलभारतवर्षीय स्तर पर आने वाले पुण्यलाभार्थियों की अवतारणा के अतिरिक्त अनेक देवी-देवताओं के तदानीन्तन स्नान करने का मनोहारी स्वरूप निरूपित किया गया है। हर सम्प्रदाय के साधु-सन्तों, महन्तों और महामण्डलेश्वरों के अखाड़ों के स्नान का व्यापक स्वरूप भी आलङ्कारिक शैली में रूपायित किया गया है। गङ्गा-यमुना-सरस्वती के सम्मिलन का दिव्य चित्राङ्कन भी पाठक का मन मोह लेगा, इसमें कोई सन्देह नहीं। कुम्भयोग की पौराणिक भित्ति का उपस्थापन भी स्पृहणीय है। तात्पर्य यह है कि कुम्भपर्व से सम्बद्ध ऐसा कोई बिन्दु इसमें नहीं छूटा है जिसका निरूपण न किया गया हो। अन्त में 'कुम्भाष्टकम्' लिखकर कविवर श्री उपाध्याय जी ने भक्तों के लिये इसे और भी उपादेय और स्पृहणीय बना दिया है।

**'आनन्दशतकम्'** में भारत की विख्यात आध्यात्मिक विभूति माता आनन्दमयी के जीवन पर विशद प्रकाश डाला गया है। उनके उत्पत्तिकाल से लेकर निर्वाणकाल तक का काव्यात्मक चित्रण इस शतक में लेखक ने चित्रित किया है। माता आनन्दमयी की बाल्यावस्था से ही उनके अन्तःकरण में उठने वाली आध्यात्मिक चेतना, सांसारिक विषयभोगों से सर्वथा विरक्ति, ईश्वर के प्रति उत्तरोत्तर बढ़ती हुई अनुरक्ति के साथ उनकी उदाराशयता, परदुःखकातरता आदि का अत्यन्त ओजःपूर्ण वर्णन कर श्री उपाध्याय जी ने निश्चय ही भारत की अध्यात्मनिष्ठा की समर्चना की है। इसमें भी अन्त में 'आनन्दाष्टकम्' अत्यन्त मनोरम काव्यकल्पनाओं के साथ उपनिबद्ध है।

मीरजापुर नगर से लगभग ३ किलोमीटर पूर्व बसे पण्डितपुर ग्राम में आज से ५३ वर्ष पूर्व अतीव सरल हृदय, सज्जनता की जीवन्त प्रतिमूर्ति, मानवता के जीवन्त विग्रह एवं माता विन्ध्यवासिनी के अनन्य आस्थावान् भक्त, स्व० श्रद्धेय **पं० श्री सङ्कठा प्रसाद उपाध्याय** के द्वितीय पुत्र के रूप में इस धराधाम पर अवतीर्ण होने वाले **श्री शिव जी उपाध्याय** का बाल्य-जीवन ग्रामीण परिवेश में विकसित हुआ। प्रारम्भिक शिक्षा के पश्चात् आप देववाणी संस्कृत के अध्ययन की ओर उन्मुख हुए। साहित्य से

मध्यमा तक की शिक्षा संयुक्त संस्कृत महाविद्यालय, बरियाघाट, मीरजापुर में पूज्य गुरुदेव **पं० सरयू प्रसाद उपाध्याय** के चरण-शरण में पूर्ण करने के अनन्तर आपने साहित्यशास्त्री तथा साहित्याचार्य की परीक्षायें तदानीन्तन वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी से साहित्य-मीमांसादि शास्त्रों के अप्रतिम विद्वान् **पं० पी० एन० पट्टाभिराम शास्त्री** जी के निर्देशन में प्रथम श्रेणी में उत्तीर्ण कीं तथा उसी विश्वविद्यालय के साहित्य-विभाग में व्याख्यातृ पद पर नियुक्त हो गये। सम्प्रति आप उसी विभाग में विभागाध्यक्ष पद पर आसीन हैं। श्री उपाध्याय जी ने १९६३ से १९७० ई० तक केवल सात वर्षों तक संस्कृत का अध्ययन कर विलक्षण कवित्वशक्ति और पाण्डित्य का अर्जन किया है, जो अपने में एक अप्रतिम उदाहरण है।

आप में काव्य-रचना के अङ्कुर प्रारम्भ से ही निकलने लगे थे, फलतः मीरजापुर में उत्तरमध्यमा करते हुए **'विन्ध्येश्वरीस्तवः'** नामक पुस्तक का प्रणयन किया, जिसका मुद्रण प्रयाग में हुआ था। यही श्री उपाध्याय जी की प्रथम संस्कृत काव्यकृति है। इसमें माता विन्ध्यवासिनी की स्तुति उपनिबद्ध है। आपकी पूजनीया माता जी **श्रीमती राजराजेश्वरी देवी उपाध्याय** विन्ध्याचल की कन्या हैं, अतः उनके पावन गर्भ से उत्पन्न होने के कारण ही मानो आपको अपनी प्राथमिक काव्यकृति में विन्ध्यवासिनी के स्तवन की प्रेरणा हुई। तदनन्तर संस्कृत विश्वविद्यालय, वाराणसी के अध्यापन जीवन में आपने दहेज समस्या को लेकर **'यौतकम्'** नामक सफल संस्कृत नाटक का प्रणयन किया, जिसका अनेक अवसरों पर सुन्दर मञ्चन हुआ और जिसमें आपने भी जीवन्त अभिनय किया। श्री उपाध्याय जी के द्वारा प्रणीत एक दार्शनिक ग्रन्थरत्न **'सर्वदर्शनविमर्शः'** है, जिसमें प्रायः एक सहस्र कारिकाओं में सभी दर्शनों के सार का विचार किया गया है। साहित्य-शास्त्र जैसे सरस और मसृण सरणि का यात्री कवि दर्शन जैसे नीरस और बन्धुर सरणि का अनुसरण करे यह सर्वथा वैपरीत्य-व्यापार-संपरीत है, पर 'नैषधीयचरित' जैसे साहित्य और 'खण्डनखण्डखाद्य' जैसे चूडान्त वेदान्त ग्रन्थों के कर्त्ता महाकवि श्रीहर्ष की **'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले, तर्के वा मयि संविधातरि समं लीलायते भारती'** की अन्वर्थ उक्ति की चरितार्थता श्री उपाध्याय जी में भी प्रतिफलित है, जिसके कारण साहित्य और दर्शन जैसे विरुद्ध विषयों के लेखन में उनकी

लेखनी अप्रतिहत चल पायी। किसी भी विषय को लेकर धाराप्रवाह रूप से कविताओं की राशि एकत्र कर देना इनके बायें हाथ का खेल है। पूजनीय गुरुदेव श्री पट्टाभिराम शास्त्री जी के अभिनन्दन-ग्रन्थ के लिए लिखित **'अभिरामचम्पूः'** में भी पण्डित जी का पाण्डित्यप्रकर्ष दर्शनीय है। गद्य और पद्य दोनों ही विधाओं में दण्डी की भाषा के अनुयायी श्री उपाध्याय जी के दो शतक 'साम्बशतक' और 'श्रीसम्पूर्णानन्दशतक' अभी मुद्रण की पङ्क्ति में मुद्रणार्थ प्रतीक्षारत हैं। आपका कारिकावृत्तिबद्ध **'साहित्यसन्दर्भः'** ग्रन्थ साहित्यशास्त्र का लक्षण-ग्रन्थ प्रकाशित और पुरस्कृत है। संस्कृत साहित्य के मूर्धन्य आशुकवि **श्री शिवजी उपाध्याय** अभी और अनेक ग्रन्थरत्नों की माला गुम्फित कर सुरसरस्वती की समर्चना करते रहेंगे, इस विश्वास के साथ मैं उनका सादर अभिनन्दन एवं शुभाशंसन करता हूँ।

नागपञ्चमी, शुक्रवार
वि०सं० २०५४
दि० ८ अगस्त, १९९७ ई०

**दुर्गादत्त उपाध्याय 'दत्त'**
दुर्गानिकेतनम्, धानूकूप,
विन्ध्याचल-२३१ ३०७
मीरजापुर (उ०प्र०)

।।श्रीः।।

# अथ श्रीशक्तिशतकम्

**शक्ते ! त्वं न विलम्बमानमनसा दूरं विदूरं व्रज**
**भ्राम्यद्भूरिमहीसुराः पुनरिमे पौलस्त्यपौत्रायिताः।**
**एतान् रामनुतेऽत्र मातरधुना हन्तुं न सम्प्रार्थये**
**सर्वान् साधुचरित्रचित्रितमतीन् सन्धातुमीहेतराम् ।।१।।**

हे मातः शक्ति ! तुम विलम्ब करने की भावना से बहुत दूर मत जाओ। पौलस्त्य पौत्रों की तरह आचरण करनेवाले ये महीसुर पुनः अत्यधिक भ्रान्त एवं सञ्चरणशील हो गये हैं। हे रामाराधिते! इन्हें इस समय मारने की प्रार्थना मैं नहीं कर रहा हूँ; अपितु सभी को साधुचरित्रयुक्त सन्मतिसम्पन्न बनाना चाहता हूँ।।१।।

**मातः! प्रातरुपेत्य सम्भर शिशुं रोदित्ययं साम्प्रतं**
**भूयो बाष्पकणान् प्रसारयति गां विश्वात्मना खिद्यते।**
**मोहध्वान्तनिशा निशाचरचमूः सर्वत्र खड्गोद्यता**
**खण्डं खण्डमिदं विधातुमखिलं यत्रास्त्यसौ सुस्थितः।।२।।**

हे मातः ! यह शिशु इस समय रो रहा है, वार–वार आँसू बहा रहा है तथा अत्यधिक खिन्न हो रहा है। अतः प्रातःकाल आकर इस शिशु का लालन–पालन करो। इस अज्ञानान्धकारमयी रात्रि में निशाचरों की सेना चारों ओर तलवार लेकर खड़ी है और आपका यह शिशु जहाँ सुस्थित है (वहीं इसे अर्थात् विश्व को) पूर्णतः खण्ड–खण्ड कर देना चाहती है।।२।।

**देवि! त्वं कुरुषे नु किं,किमु भवत्कर्णौ क्वचिद् व्यापृतौ**
**नेत्रे क्वापि निमीलिते हिमवतः क्वापि त्वमस्यन्तरे।**
**शेषे वा शयनीयके हरिरसौ किं त्वां न सम्मुञ्चति**
**शेषे किं स्वयमेव साम्प्रतमये ! पुत्रे न तत् साम्प्रतम्।।३।।**

---

१. महीसुरपदं नात्र ब्राह्मणत्वजातिपरं प्रत्युत बुद्धिविज्ञानवादिन उद्दिश्य प्रयुक्तं महीगतानां तेषामेव सुरवन्नायकत्वदर्शनात्।

हे देवि ! तुम कृपा क्यों नहीं कर रही हो। क्या तुम्हारे कान अन्यत्र लगे हुए हैं। क्या नेत्र किसी ध्यान में लगे हैं। क्या तुम हिमालय के किसी अन्तराल में विराजमान हो। क्या विस्तर पर सो रही हो अथवा भगवान् विष्णु तुम्हें नहीं छोड़ रहे हैं। अथवा क्या इस समय स्वयं ही सो रही हो। अपने इस पुत्र की ऐसी उपेक्षा इस समय उचित नहीं है।।३।।

**न त्वं कुत्रचिदद्य पश्यसि सुरान् साधून्नरान् किन्नु तान्**
**यैः पूर्वं परियाचितासि जगतः कल्याणकार्योन्मुखैः।**
**मातश्चिन्तय चिन्तय त्वमधुना लोके खलीकारको**
**लोकोऽयं स्वयमेव तं पुनरिमं को नाम साधुं क्रियात्।।४।।**

हे मातः ! जगत् के कल्याणकार्यों में संलग्न जिन देवों, सज्जनों के द्वारा तुम पहले परियाचित की गई हो, उनकी ओर तनिक भी दृष्टि निक्षेप नहीं कर रही हो। हे जननि ! तुम अब सोचो, विचार करो कि इस संसार में दुष्टता के शिकार लोग कैसे त्राण पायें। इन दुष्टों को कौन सज्जन बनाये।।४।।

**देवि ! त्वं कलया कलापय जनाँस्तप्तानिमान् सर्वतः**
**सद्योऽवद्यचरित्रधर्षितधियां त्वञ्चैकमालम्बनम्।**
**मां चेन्मुञ्चसि मुञ्च नाहमधुना स्वार्थाय सम्प्रार्थये**
**स्वार्थोऽप्यस्ति यतश्च सोऽहमिह ते पुत्रीकृतोऽस्मि त्वया।।५।।**

हे देवि ! चारों ओर से सन्तप्त इन मनुष्यों को अपनी कला से कलापित करो। दुष्ट चरित्रों से व्याप्त इन राक्षसों को सद्बुद्धि प्रदान करने के लिए तुम्हीं एकमात्र अवलम्ब हो। यदि मुझे छोड़ रही हो तो छोड़ दो, मैं इस समय स्वार्थ हेतु प्रार्थना नहीं कर रहा हूँ। यदि स्वार्थ है भी तो बस यही कि मैं इस संसार में तुम्हारे द्वारा पुत्ररूप में स्वीकृत किया गया हूँ।।५।।

**संसारप्रणिधानकर्मनिरते ! संस्कारसंशोभितेऽ-**
**हङ्कारप्रतिसारणैकनिपुणे ! हुङ्कारनादप्रिये !**
**ऐङ्कारप्रणयप्रमाणितपदे ! ह्रीङ्कारसत्कारिते !**
**क्लीङ्कारप्रतिभाविभासितवपुष्के ! के वयं तेऽन्तिके।।६।।**

हे संसारप्रणिधानकर्मसंलग्ने ! संस्कारसंशोभिते ! अहङ्कार दूर करने में एकमात्र निपुणे ! हुङ्कारनादप्रिये! ऐङ्कार के प्रणय में प्रमाणित पद वाली ! ह्रीङ्कार से सत्कृत की जाने वाली हे ! क्लीङ्कार की प्रतिभा से विभासित शरीर वाली मातः ! तुम्हारे समीप भला हमारी क्या बिसात।।६।।

**विद्याबुद्धिविवेकभासितसितस्वान्तान्तरङ्गाञ्चिते !**
**रम्यक्राम्यदमन्दनन्दितसुरस्रोतस्वति ! स्वस्ति ते।**
**शश्वद्वादननादलोलविलुलद्वीणोल्लसत्सत्करे !**
**सत्कारेण समाह्वयामि विबुधव्रातार्चिते ! पश्य माम् ।।७।।**

हे विद्या, बुद्धि तथा विवेक से सुशोभित उज्ज्वल अन्तःकरण वाली, सुन्दर सञ्चार से तीव्र प्रसन्न सुरनदि ! तुम्हारा कल्याण हो। निरन्तर वादन के शब्दों से चञ्चल विलुलित वीणा से सुशोभित हाथ वाली ! (मैं) तुम्हें आदरपूर्वक पुकार रहा हूँ। हे देवसमूहपूजिते देवि ! मुझ (पुत्र) को (कृपया) देखो।।७।।

**विश्वस्मिन् करुणाविसारणपटुप्राणे ! प्रमाणे कृतौ**
**त्वं देवि ! प्रथिताऽसि धर्मसरणित्राणाय विश्वम्भरे!**
**शम्भुस्त्वां गृहिणीमिवेच्छति हरिस्त्वामन्तरा नेक्षते**
**ब्रह्माऽपि प्रणमन्निव प्रवयसा ज्येष्ठोऽपि च त्वां सदा।।८।।**

इस विश्व में करुणा के प्रसारण में लग्न चित्तवाली हे विश्वम्भरे! प्रमाण में, कृति में धर्ममार्ग की रक्षा के लिये हे देवि ! तुम प्रसिद्ध हो। शङ्कर तुम्हें गृहिणी की तरह चाहते हैं, विष्णु तुम्हें छोड़कर किसी को नहीं देखते और अवस्था से ज्येष्ठ होते हुए भी ब्रह्मा सदा तुम्हें प्रणाम करते हैं।।८।।

**मुग्धे ! त्वङ्किल कं विलोकयसि? किं बालेन्दुमौलीश्वरो**
**व्यासक्तः क्वचिदन्यथा परिहरँस्ते सङ्गमारादसौ।**
**आहो क्वापि गणेश एष हिमवत्कान्तारमन्तर्गतः**
**किं वाऽसावरिसार्थनाशनपरः क्रान्तः कुमारोऽरिणा ।।९।।**

हे मुग्धे! तुम किसे देख रही हो? क्या शङ्कर तुम्हारा साथ छोड़कर कहीं अन्यत्र आसक्त हैं। क्या गणेश कहीं हिमालय के वनप्रान्त में तो नहीं चले गये हैं। अथवा क्या शत्रुसमूह के विनाशक कार्तिकेय शत्रु के द्वारा घिर गये हैं।।९।।

**ब्रह्माण्डप्रणयिन्यशेषभुवनोद्धारैकपुण्यव्रते !**
**सम्प्रत्यप्यनिशं समग्रमभितो विश्वं परिभ्राम्यति।**
**नैतत्क्वाप्यनुवीक्षते जगदिदं शं क्षीयमाणायुषा**
**शस्त्रास्त्रप्रकरप्रसारणमतिं स्वामुन्नतिं मन्यते ।।१०।।**

हे ब्रह्माण्डप्रणायिनि! सम्पूर्ण भुवन के उद्धार में अद्वितीय पुण्यव्रत वाली मातः ! इस समय निरन्तर समग्र विश्व सब ओर से भ्रान्त हो रहा है। कहीं भी कल्याण दृष्टिगोचर नहीं हो रहा है। क्षीण होती हुई आयु वाला यह संसार, शस्त्रास्त्रों के समूह की प्रसारण बुद्धि को ही अपनी अभ्युन्नति मान रहा है।।१०।।

**एतत्त्राणमपेक्षते तदधुना देवि ! त्वमाशु प्रियं**
**शक्तं क्वाप्यनुभूय कञ्चन जनं रामीकरोतु स्वयम्।**
**शम्भुं वाऽप्यवतारयावतर वा सम्प्रेत्य लोकेऽम्बिके !**
**काश्यां वा भवभामिनी भव पुनर्वा भारते कुत्रचित् ।।११।।**

हे मातः ! यह विश्व तुमसे त्राण की अपेक्षा रखता है। अतः इस समय किसी समर्थ (प्रियजन) को स्वयं राम बनाओ। भगवान् शङ्कर की अवतारणा करो तथा हे अम्बिके ! इस लोक में आकर काशी मे शिव की अर्द्धाङ्गिनी बनकर निवास करो अथवा भारत में कहीं भी जन्म ग्रहण करो।।११।।

**विश्वस्मिन् कलयावतारमथवा कुत्रापि कोणान्तरे**
**कञ्चिन्मानवमन्यकं निजजनं सन्धाय सन्तुष्यतु।**
**क्वापि त्वन्नय शम्भुराजनगरीं काशीं गिरिं वा गृहं**
**सर्वत्र प्रसरीसरीतु शुभदे ! सन्त्रायतां प्राणिनः ।।१२।।**

अथवा हे मातः ! विश्व के किसी भी कोने में अवतार ग्रहण करो तथा अपने को मनुष्य मानने वाले किसी स्वजन को खोजकर सन्तुष्ट हो जाओ। शिव की नगरी काशी को पर्वत पर या अपने घर पर कहीं भी ले जाओ। हे शुभदे ! सर्वत्र व्याप्त हो जाओ और प्राणियों की रक्षा करो।।१२।।

कृष्णं नाद्य समीहते न च महाजन्यप्रियं भारतं[1]
कश्चित् कौरववंशजो भरतभूभागेऽत्र नास्ते यतः।
रामोऽप्येष्यति चेद् भवेत्पुनरियं लङ्का भृशातङ्किता
साऽयोध्याऽप्यतिकष्टमाप्स्यति वनप्रस्थानकालोदये ।।१३।।

हे मातः ! आज महाभारत के कृष्ण की भी अपेक्षा नहीं है; क्योंकि भारत महायुद्ध प्रिय नहीं है और इस समय भारत में कोई कौरव-वंशज नहीं है। यदि लङ्का अत्यन्त आतङ्कशीला हो तभी राम भी आयेंगे और उनके वनप्रस्थान काल में अयोध्या भी अति कष्ट पायेगी।।१३।।

नासौ कुत्रचिदस्ति दिव्यमतिमान् भूयान् हनूमान् बली
सोऽप्यत्राप्रतिमप्रहारकनवक्षेप्यास्त्रमीष्टे न वा !
भूयाद् वा स समस्तसिद्धिसदनः श्रीमान् प्लवङ्गोत्तमः
किन्तु श्रान्तिमवश्यमाप्स्यति परां नैकेऽत्र शक्रारयः।।१४।।

दिव्य बुद्धिवाले वे बली हनुमान् भी कहीं नहीं हैं। वे भी यहाँ तीव्र प्रहार करनेवाले नवीन क्षेप्यास्त्र को रोकना चाहते हैं या नहीं? वे समस्त सिद्धियों के सदन श्रीमान् प्लवङ्गोत्तम चाहे भले ही हों किन्तु वे भी अत्यन्त थकान का अवश्य ही अनुभव करेंगे; क्योंकि यहाँ अनेक इन्द्रशत्रु (राक्षस) हैं।।१४।।

अन्येऽप्यत्र धृतावतारविबुधा ये केऽप्यभूवन् पुरा
तेषां नैव महेशभामिनि ! भवेदिच्छा क्वचिद् दर्शने।
सर्वेऽप्यन्यविधा विनाशकरणप्रायप्रमाणीकृताः
क्रान्तिक्षान्तिसुशान्तिसौख्यकलने शक्ता त्वमेवान्ततः।।१५।।

अन्य भी जो पहले अवतारधारी देवगण थे, उनकी दर्शनेच्छा कहीं नहीं है। सभी अन्य प्रकार से वे विनाश करने वाले ही प्रायः प्रमाणित हुये हैं। हे महेशभामिनि ! क्रान्ति, क्षमा, शान्ति और सुख के आकलन में अन्ततः तुम्हीं समर्थ हो।।१५।।

---

१. भारत राष्ट्र विश्व में महाजन्य (महायुद्ध) की विभीषिका को टालना चाहता है। वह युद्धप्रिय नहीं है; क्योंकि यहाँ कोई कौरववंशीय दुर्योधन नहीं है। यदि राम आयेंगे तो लङ्का आतङ्कित हो जायेगी, युद्ध होगा, जो विश्व के लिए कल्याणप्रद नहीं है।

**मातः ! सम्प्रति विश्ववारिधिगता जीवाश्च ते जन्तवो**
**नैकाणवस्त्रजवाडवाग्निविघसीकारक्रियाक्लेशिताः।**
**एतान् पायय पायय स्वयमये! माधुर्यनिस्यन्दिनौ**
**बालप्रायसुरादिसेवितचरौ पीयूषपूरौ हि तौ।।१६।।**

हे मातः ! इस समय संसार–समुद्र में विद्यमान, जितने भी जीवजन्तु हैं वे सभी अणु-अस्त्र-जन्य वाडवानल की प्रज्ज्वलनक्रिया से पीडित हैं। हे जननि! इन सभी प्राणियों को स्वयमेव माधुर्यप्रवाही, बालकरूप देवादि द्वारा पान किये गये, अमृतस्रावी उन स्तनों का आत्यन्तिक रूप से पान कराओ।।१६।।

**मातः ! प्रातरजायतात्र समुदेत्यर्को न चाद्यावधि**
**ध्वान्तच्छन्ननिशा निशाचरगणाः क्रुश्यद्ध्वनिं तन्वते।**
**सोऽहं देवि ! बिभेमि नात्मनि, परं लोकस्तु भीत्याऽनया**
**क्लिष्टो दष्ट इव प्रणश्यति ततः सोऽहं कुतः स्यामहो !।।१७।।**

हे मातः ! प्रातःकाल उदित होनेवाला सूर्य भी अद्यावधि नहीं उदित हो रहा है। अन्धकार से घिरी हुई रात है और ये राक्षसगण सक्रोध ध्वनि कर रहे हैं। हे देवि ! मैं अपने मन में डरता नहीं हूँ किन्तु इस विभीषिका से संसार तो क्लेश का अनुभव करता हुआ विनष्ट हो जायेगा तब मैं कहाँ रहूँगा।।१७।।

**त्वञ्चापि प्रथिते ! निशुम्भसहितान् शुम्भादिकान् पूर्वजान्**
**दुष्टानेव पुरा पराजितवती देवार्थनोत्प्रेरिता।**
**केचित्वद्य दिवानिशं निशिचरप्रायप्रवृत्त्या भ्रमद्-**
**यानैः खे भुवि च भ्रमन्ति परितस्ते पूर्वरक्षोऽनुजाः ।।१८।।**

हे सुप्रसिद्धे! पहले तुम्हीं ने देवों की प्रार्थना से प्रेरित होकर निशुम्भ सहित शुम्भादि दुष्ट राक्षसों को पराभूत किया था। आज कुछ राक्षसी प्रवृत्तिवाले उन दैत्यों के अनुज चारों ओर घूमते यानों से आकाश और पृथ्वी पर भ्रमण कर रहे हैं।।१८।।

**किन्त्वेतान् महिते ! नगेशतनुजे ! शम्भुप्रिये ! शाङ्करि!**
**प्रेम्णा केवलमत्र भावय जनानुन्मार्गगानप्यमून्।**
**एतेऽप्यम्ब ! यतस्त्वदीयतनयाकारा इमे भ्रान्तितः**
**शान्तिं स्वामपहाय हन्त ! कुटिलं सङ्क्लेष्टमानाः किल।।१९।।**

हे पूजनीये नगेशपुत्रि शम्भुप्रिये शाङ्करि! विपथगामी इन जनों को केवल प्रेम से भावित करो! हे अम्ब! क्योंकि ये भी तुम्हारे पुत्रस्वरूप हैं। ये भ्रमवश अपनी शान्ति खोकर कुटिल चेष्टायें कर रहे हैं।।१९।।

**किञ्चित्किञ्चिदपि ब्रवीमि जननि! स्नेहादपीह प्रियं**
**नासौ शान्तमनाः शृणोति किमपि प्रत्युत्तरेऽप्युन्मनाः।**
**धिक्कृत्यापकरोति सस्मितदृशा संवीक्ष्य मोदायते**
**नम्रीभूय निमीलिताक्ष इव तं पश्यन् विदूयेतराम्।।२०।।**

हे जननि ! स्नेहभावना से भी किसी से कुछ प्रिय बात कहता हूँ तो वह न तो शान्तचित्त होकर कुछ सुनता है और न ही अन्यमनस्क-सा कुछ उत्तर ही देता है; अपितु तिरस्कारभाव से सस्मित दृष्टि से देखकर प्रसन्न होता है और मैं सिर झुकाकर अधमुँदी आँखों से उसे देखता हुआ सन्तप्त हो जाता हूँ।।२०।।

**त्वञ्चेदिच्छसि नैव नम्रवचनं श्रोतुं मदीयं पुनः**
**सोऽयं पुत्रक एति ते किमपि न त्वां श्रावयिष्यत्यपि।**
**गत्वाऽन्यत्र पुरारिसत्प्रियतमे ! त्वामेव निन्दाम्यहं**
**संस्तूय श्रवणे गणेशमथवा षड्वक्त्रमाराधये।।२१।।**

हे मातः ! यदि तुम मेरे निवेदनों को सुनना नहीं चाहती हो तो यह तुम्हारा पुत्र चला जा रहा है, तुम्हें कुछ भी नहीं सुनायेगा। हे शङ्करवल्लभे! अन्यत्र जाकर तुम्हारी निन्दा करूँगा और कान में गुपचुप गणेश अथवा कार्तिकेय की आराधना करूँगा।।।२१।।

**द्वावाराध्य ततोऽप्यसाध्यजगतीकार्यार्थमुत्प्रेरये**
**हेरम्बः स्वयमेव संगदितवान् मामेकदेत्थं वचः।**
**माता मे गृहकर्मधर्मनिरता सम्यग् जगद्रक्षणे**
**नोत्साहं विदधाति तं ननु गुहं मां वा तदर्थं स्मर।।२२।।**

हे मातः ! उन दोनों की आराधना करके उनसे असाध्य जगत् के कार्य के लिए प्रेरित करूँगा। एक वार गणेश ने मुझसे ये बातें कहीं थीं कि मेरी माता गृहकार्य में संलग्न होने के कारण संसार की रक्षा में यथोचित उत्साह नहीं रखती। अतः एतदर्थ मेरा या कार्तिकेय का स्मरण करो।।२२।।

**सोऽहं तं प्रति किञ्चिदञ्चितदृशा दृष्ट्वा तदैवाब्रवम्,**
**बन्धो! देव! गणेश! मोदकसमास्वादैकविज्ञो भवान्।**
**विश्वं त्रातुममोघशक्तिभरितं स्वात्मानमापाद्यतां**
**षड्वक्त्रेण निजानुजेन च समं विज्ञानमासाद्यताम् ।।२३।।**

तब मैंने गणेश को कुछ तिरछी दृष्टि से देखकर उस समय कहा था कि हे बन्धु गणेश ! आप लड्डुओं का स्वाद लेने में ही विज्ञ हैं। विश्व की रक्षा के लिए अपने को अमोघ शक्ति सम्पन्न बनाओ और अपने अनुज कार्तिकेय के साथ विशेष ज्ञान[1] अर्जित करो।।२३।।

**मातश्चेत्थमिमं करीन्द्रवदनं तं सान्त्वनामात्रतः**
**सन्तोष्य प्रतिपूज्य मोदकभरैराश्वास्य मुक्तोऽभवम्।**
**पूजार्थं स परं समातुर इति प्रायः समे जानते**
**षड्वक्त्रस्तु तदा न तत्र विहरन्नासीदपश्यं न तम् ।।२४।।**

हे मातः! इस तरह उन गणेश को सान्त्वना मात्र से सन्तुष्ट करके, उनकी पूजा करके और लड्डुओं से आश्वस्त करके छुटकारा पाया। यह प्रायः सभी जानते हैं कि वे गणेश पूजार्थ अत्यन्त आतुर रहते हैं उस समय कार्तिकेय वहाँ विहार नहीं कर रहे थे, अतः उन्हें नहीं देख पाया।।२४।।

**शम्भुः सम्प्रति योगसाधनविधौ कञ्चित् समाधिं दधन्**
**नो जाने स कदा ततो नु विरतः स्यादत्र योगीश्वरः।**
**ब्रह्मा वेदकृती पदार्थचयनाख्यातक्रियापण्डितः**
**विष्णुस्तु प्रखरः करोति कृपया कल्याणकार्यं सदा ।।२५।।**

इस समय शङ्कर योगाभ्यासविधि में समाधिस्थ हैं। पता नहीं वे कब उससे विरत होंगे। ब्रह्मा जो वेदों के पण्डित हैं, वे पदार्थों के चयन और उसकी यज्ञादि आख्यात क्रियाओं में ही अपना पाण्डित्य दिखा रहे हैं। विष्णु सदैव कृपाभावना से कल्याणकार्य करते हैं।।२५।।

---

१. विशेषज्ञान का आशय है कि वैज्ञानिकों द्वारा निर्मित विश्वनाशक परमाणुशस्त्रों के प्रतिकार का विज्ञान (Super Science) अर्जित करो।

**हे निष्कारणविश्वरक्षणकृतोद्योगैकयोगेश्वरि !**
**त्वञ्चैव प्रथमा विभक्तिरतुला त्वय्येव सा कर्तृता।**
**विश्वं सत्यविधानवाक्यसरणिस्थानादुदग्रक्रियं**
**सञ्जातं तदशेषितक्षणवपुः संवीक्षतां शाम्भवि !।।२६।।**

हे अकारण विश्वरक्षाविधानशालिनि! तुम्हीं प्राथमिक सत्ता हो और तुम्हीं में वह अद्वितीय कर्तृत्व शक्ति है। यह जगत् सत्य विधानवाक्य के पथ से विचलित हो गया है। अतः हे शाम्भवि ! अशेषित (नाशोन्मुख) क्षणभङ्गुर शरीर वाले इस विश्व को देखो (रक्षा करो)।।२६।।

**आहोस्विन्निखिलाश्च ते प्रियतमास्त्वञ्चापि तेषां प्रिया**
**भूयांसोऽवतरन्ति ते स्म भुवने भूयोवपुर्धारिणः**
**त्वन्त्वेकैव समग्रशक्तिभरणप्राणप्रदाऽऽविर्बभौ**
**मातस्तत्स्वयमेव तं श्रममिहाङ्गीकृत्य रक्षात्मजान् ।।२७।।**

अथवा हे मातः ! वे सभी आपके अत्यन्त प्रिय हैं और आप उनकी प्रिय हैं। वे अत्यधिक संख्या में संसार में शरीर धारण कर अवतीर्ण हो चुके हैं। तुम तो अकेली ही सम्पूर्ण शक्तियों के सम्भरण में प्राणप्रदायिनी रूप में प्रकट हुई हो, अतः हे जननि! स्वयं ही उस श्रम को स्वीकार करके (अवतार ग्रहण कर) इस संसार में स्वजनों की रक्षा करो।।२७।।

**सर्वेष्वेक इहास्ति जीव इति तन्नात्मा पृथङ् मन्यते**
**आत्मानश्च समे तथैव परमात्मानोऽपि लोका इमे।**
**ब्रह्मोपेन्द्रमहेन्द्रशम्भुसदृशाश्चैते तु सन्ति स्वतः**
**क्लिष्टास्ते किल कर्मणैव तदिमान् सत्कर्मणा योजय।।२८।।**

सभी प्राणियों में एक ही जीव है, अतः आत्मा पृथक् नहीं है। सब में एक ही आत्मतत्त्व है। ये सभी आत्मस्वरूप हैं और उसी तरह परमात्मस्वरूप भी हैं। ये स्वतः ही ब्रह्मा, विष्णु, इन्द्र और शिव के समान हैं। हाँ, ये अपने कर्म से ही क्लेशदायी हैं, अतः इन्हें सत्कर्मशील बनाओ।।२८।।

**सत्कर्माभिरतेषु तेषु बहुशो रामास्तथा विष्णवो**
**ब्रह्माणोऽपि सुराः सुरेन्द्रसहिताः शक्ष्यन्त्यमी शम्भवः।**
**देव्यश्चापि तवानुरूपमधुराः सीता-रमा-भारती-**
**दुर्गाद्याश्च भवेयुरत्र महिते! त्वञ्चैकशक्तिः परा।।२९।।**

सत्कर्म में लग्न होने से उनमें बहुत से राम, विष्णु, ब्रह्मा, शङ्कर तथा इन्द्र से युक्त सुर होंगे और स्त्रियाँ भी तुम्हारे समान मधुर सीता, रमा, सरस्वती एवं दुर्गा आदि होंगी, पर हे पूजनीय! तुम तो अद्वितीय परा शक्ति हो।।२९।।

**एतेष्वत्र भवत्सु देवनिकरप्रायेषु मातः! स्वत-**
**स्त्वञ्चाप्यत्र निवासभूमिमतुलां स्वात्मीकरोषि ध्रुवम्।**
**शम्भोर्नङ्क्ष्यति चाशु योगजनितः कश्चित्समाधिस्तथा**
**ब्रह्माद्या अपि जागरूकमनसा द्रक्ष्यन्ति लोकानिमान्।।३०।।**

यहाँ इनके देवसमूह-समान हो जाने पर हे मातः! स्वतः तुम भी इसे निश्चित रूप से अपनी निवासभूमी बनाओगी। शीघ्र ही शङ्कर की कोई समाधि भङ्ग होगी और ब्रह्मा आदि भी जागरूक चित्त से इन प्राणियों को देखेंगे।।३०।।

**भूयोऽसौ महिमा हिमालयगृहे कच्चिद् भवेदुत्तमो**
**भूयो देवगणैः समेत्य गिरिशः स्तूयेत कच्चिन्नु तैः।**
**भूयो नारदसूचनासमुचितं कच्चिन्नगेन्द्रो महान्**
**त्वां संयोज्य शिवे! शिवेन विधिना कुर्याद् विवाहोत्सवम्।।३१।।**

हे शिवे! सम्भवतः पुनः हिमालय के गृह में कोई उत्तम महिमा (महोत्सव) हो, सम्भवतः पुनः उन देवगणों के द्वारा शङ्कर स्तुत हों तथा सम्भवतः पुनः नारद की सूचना के अनुसार श्रेष्ठ हिमाचल तुम्हें सविधि शिव के साथ योजित करके विवाहोत्सव करें।।३१।।

**जातेऽस्मिन् महतां महे भगवति ! श्रीपार्वति ! त्वद्गृहं**
**किं न स्यादतुलं जगन्नवनवोद्यत्सम्पदामास्पदम्।**
**भूयो जन्म निजं गणेशगुहकौ कौचिल्लभेतामुभौ**
**हेरम्बः कलभास्य एव भविताऽलम्बोदरो निर्मदः ।।३२।।**

हे भगवति पार्वति! महनीयों के इस महोत्सव के सम्पन्न होने पर तुम्हारा गृह संसार की अतिनवीन सम्पत्तियों का आस्पद नहीं होगा क्या? आपके गृह में कोई गणेश और कार्तिकेय ये दोनों पुनः अपना जन्म धारण करें किन्तु गणेश गजमुख ही हों वे लम्बे उदर वाले तथा मदयुक्त न हों।।३२।।

**नासौ कुत्रचिदेव यास्यति पुनर्योद्धुं कुमारो बलात्**
**कश्चित्तारक एव नात्र भुवने भावी मदान्धोऽसुरः।**
**त्वामिच्छामि च पार्वतीमिति धिया नो दक्षकन्या भवे-**
**स्तत्कन्यात्व उरीकृते तु गिरिजे ! स्यात्तेऽग्निकुण्डे गतिः।।३३।।**

हे देवि ! ये कार्तिकेय फिर कहीं युद्ध करने नहीं जायेंगे क्योंकि इस लोक में (अब आगे) कोई मदान्ध तारकासुर नहीं होगा और भी, (मैं) तुम्हें पार्वती रूप में ही चाहता हूँ, दक्षकन्या के रूप में नहीं क्योंकि दक्ष की कन्या होने पर हे गिरिजे ! तुम्हारी स्थिति अग्निकुण्ड में हो जायेगी, अर्थात् तुम सती हो जाओगी[१]।।३३।।

**भूयस्ते तप एव कष्टजनकं जन्माऽपि भूयस्तथा**
**भूयोऽनङ्गरिपुस्तवैष शरणं पीडा प्रसूतेर्भृशम्।**
**भूयो नारदनायकत्वमतुलं भूयो विवाहादिकं**
**भूयो भूय इहैव सम्भवतया शम्भुप्रिया वा न वा।।३४।।**

(पतिरूप में शङ्कर को पाने कि लिए) फिर से तुम्हारी तपस्या ही कष्टजनक होगी, फिर से जन्म भी होगा, फिर ये शङ्कर तुम्हारे पास जायेंगे, पुनः प्रसवजन्य अत्यन्त पीड़ा सहनी पड़ेगी, फिर से नारद का नायकत्व होगा, फिर से सब विवाहादि कृत्य होंगे और वार-वार यही सब घटनायें सम्भव होने पर तुम शम्भु की प्रियतमा होगी या नहीं, क्या पता।।३४।।

---

१. यह पौराणिक आख्यान प्रसिद्ध ही है कि दक्ष प्रजापति के यज्ञ में शिवप्रिया सती, पिता दक्ष के द्वारा अनाहूत होने पर भी गईं जब कि शिव उन्हें मना कर रहे थे। वहाँ पहुँचकर शिव (रुद्र) का यज्ञभाग न देखकर, पिता दक्ष द्वारा पति शिव के घोर अपमान को लक्ष्यकर अत्यन्त क्षुब्ध सती ने यज्ञ के अग्निकुण्ड में कूद कर प्राणत्याग कर दिया था।

**भूयः केनचिदम्ब ! शम्भुमहिते ! लोकत्रयाराधिते !**
**त्वद्गुह्यं निखिलं च किं कवयता दासेन ते वर्ण्यताम्।**
**भूयो हारविहारभारवहनं भूयो भवे भासनं**
**भूयस्तत्कविनायिकाप्रकरणे पात्रीकृता स्याः परे।।३५।।**

हे शम्भुपूजिते मातः! लोकत्रयाराधिते ! पुनः किसी सेवक कवि (कालिदास) के द्वारा तुम्हारा गोपनीय सम्पूर्ण वृत्त वर्णन किया जायगा, फिर से तुम्हारा हार, विहार तथा भारवहन कहा जायगा, फिर से तुम्हारी संसार में प्रतीति निरूपित की जायेगी और उस कविकृत नायिका के प्रकरण में तुम पुनः पात्र बनायी जाओगी।।३५।।

**त्वत्पात्रीकरणेन तेन कविना भूयेत हा ! कुष्ठिना**
**लाभः स्यादिह केवलो रघुमहाकाव्योद्भवो भूयसा[१]।**
**तस्यास्तित्वमिहास्ति सोऽपि गिरिजे ! तेनात्र सञ्जीवति**
**भूयो भूय इहास्तु ते प्रजननं तस्मान्न मे रोचते।।३६।।**

तुम्हें नायिकात्वरूप से पात्र बनाने वाला वह कवि (कालिदास) हाय ! फिर कोढ़ी हो जायेगा लाभ तो मात्र इतना ही होगा कि यहाँ केवल नवीन रघुवंश महाकाव्य का पुनः उद्भव होगा। हे गिरिजे ! उसका अस्तित्व यहाँ है जिससे वह यहाँ जीवित है। इस जगत् में पुनः-पुनः तुम्हारी उत्पत्ति हो, यह मुझे अच्छा नहीं लगता।।३६।।

**पृच्छेस्त्वं भवदम्बिके ! किमु जनिर्मे तत्त्वया प्रार्थ्यते?**
**तत्रोक्तं ननु पूर्वमेव भवतीच्छा चेत्पुनः श्रूयताम्।**
**अद्यानन्तपराणुशस्त्रभरितं विश्वं बृहद्विस्फुट-**
**ज्ज्वालादग्धकलेवरायितमिदं तद्रक्षणं स्याद् ध्रुवम्।।३७।।**

हे अम्बिके ! यदि तुम पूछो कि मेरा जन्म तुम क्यों चाहते हो? तो मैं कहूँगा कि वह तो मैंने पहले ही कह दिया है। यदि आपकी पुनः सुनने की इच्छा है तो सुनिये। आज बहुत बड़ी फूटती ज्वाला से जलते हुए कलेवर वाला यह विश्व असीम परमाणु शस्त्रों से भर गया है, अतः उसकी रक्षा अवश्य होनी चाहिए।।३७।।

---

१. कुमारसम्भव महाकाव्य में शङ्कर-पार्वती-सम्भोग-वर्णन के कारण कालीदास कुष्ठरोग से ग्रस्त हो गये थे, पुनः रघुवंश महाकाव्य की रचना करके उक्त रोग से मुक्त हुए थे-ऐसी किंवदन्ती प्रसिद्ध है।

**बाणे त्राणविशारदः स भगवान् रामः, स गोपालको**
**वंशीवादनरम्यरासरसिको गीतागतः पार्थकः।**
**वाराहीकृतवामनीकृतपुनःसिंहीकृतेत्यादयः,**
**सर्वेऽप्यत्र विलक्षणाङ्गवपुषो देवि! स्वयं पश्य तान्।।३८।।**

वे भगवान् राम बाण में त्राणविशारद हैं, वे गोपाल वंशीवादन और रमणीय रास के प्रेमी हैं, अर्जुन गीतागत हैं। वाराह, वामन और नृसिंह रूप धारण करने वाले सभी अवतार विलक्षण शरीर वाले हैं। हे देवि ! आप स्वयं उन्हें देख लें।।३८।।

**को वा स्यादिह शक्त उन्मदनदन्नानास्त्रशस्त्रप्रथा-**
**निर्माणप्रणयापनोदनविधौ त्वामन्तरा चण्डिके !**
**शक्तास्ते यदि सन्तु तत्पुनरिमे त्वामेव शक्तिं श्रिता**
**भूयासुस्तदये परात्परमहाशक्ते ! त्वमेहि स्वयम् ।।३९।।**

हे मातः ! इस संसार में उन्मत्त नाद करते हुए विविध अस्त्र शस्त्रों के निर्माण की चाह हटाने में तुमको छोड़कर दूसरा कौन समर्थ है। यदि वे अवतार समर्थ हों भी तो तुम्हारी ही शक्ति का आधार लेंगे, अतः हे परात्परमहाशक्तिशीले ! तुम्हीं स्वयं आओ।।३९।।

।।पृच्छास्तुतिः।।

**मातस्त्वन्ननु का? सुत ! त्रिजगतीरूपैव साऽहं शुभा**
**सा भूमीति जडात्मिका नहि नहि प्राणित्यसौ जीवनात्।**
**किं तज्जीवनमस्ति ! जीवजनिता शक्तिः परा पावनी**
**का शक्तिः ! त्रिजगत्समूहितपदा प्रोद्यद्धिमाद्रिस्थिता ।।४०।।**

हे मातः ! तुम कौन हो ? पुत्र ! मैं त्रैलोक्यरूपिणी मंगलमयी हूँ। वह त्रिलोकी तो जड़-भूमि है। नहीं-नहीं, वह जीवनी शक्ति से प्राणपूर्णा है। वह जीवन क्या है? वह जीवों में उत्पन्न श्रेष्ठ पवित्र शक्ति है। शक्ति क्या है? वह शक्ति तीनों लोकों में विद्यमान और त्रिलोक-सत्तात्मिका होकर उन्नत हिमालय में स्थित है।।४०।।

**कोऽयं देवि ! हिमाद्रिरेष? ननु सा शक्तिः कथं तद्गता?**
**सोऽयं मे सुत ! भूमिभृद् भरतभूभूषायमाणो महान्।**
**तत्र त्वन्नु कुतो गता? शृणु, सुता साऽहं महाभूभृतः**
**किं ते नाम नगेशजे? स्मितमुखीं मां पार्वतीं स्वीकुरु ।।४१।।**

हे देवि ! यह हिमालय कौन है? और वह शक्ति वहाँ क्यों गई? हे पुत्र ! वह हिमालय भूभरण-क्षम होकर भारतवर्ष का आभूषणरूप महान् पर्वत है। हे जननि ! तुम वहाँ क्यों गई ? हे पुत्र ! सुनो, मैं उस महापर्वत की पुत्री हूँ। हे नगेशजे ! तुम्हारा नाम क्या है ? हे पुत्र ! स्मितमुखी मुझे पार्वती जानो।।४१।।

**आश्चर्यं भगवत्यहो ! क्वचन नो पाषाणकन्या श्रुता**
**नाश्चर्यं कुरु पुत्र ! सोऽस्ति जगतां देवालयो दैवतम्।**
**विश्वासो ननु केवलोऽयमिति हे देवि ! भ्रमे भ्राम्यसि,**
**पश्यैनं वियदुन्नतं हिमसरिच्छायोल्लसन्मानसम्।।४२।।**

हे भगवति ! यह तो आश्चर्य की बात है, पाषाण की कन्या तो कहीं नहीं सुनी गई है। हे पुत्र ! आश्चर्य मत करो, वह हिमालय, जगत् के देवों का स्थान है और वह स्वतः देवस्वरूप है। हे देवि ! यह तो केवल (मिथ्या) विश्वास है, तुम भ्रान्त हो। (नहीं, नहीं पुत्र) (द्रवीभूत) हिम (की) सरिताओं की शोभा से सम्पन्न मानस् (चित्त तथा मानसरोवर) वाले आकाश में ऊँचे उठे हुए इसे (हिमालय को) देखो।।४२।।

**नाहं तत्र गतोऽस्मि मातरधुना नो वा तमेनं तथा**
**मन्ये, त्वं भणसीति केवलमहं कर्णे करोमीत्यलम्।**
**पुत्र ! त्वन्ननु कुत्र सम्प्रति वसस्यत्रैव काश्यां क्वचिद्**
**एवं तच्छृणु सा ममापि नगरी तत्रान्नपूर्णाऽस्म्यहम्।।४३।।**

हे मातः ! मैं तो वहाँ नहीं गया हूँ और उस हिमालय को वैसा नहीं मानता। हाँ, तुम कह रही हो और मैं उसे कान से सुन रहा हूँ, बात इतनी ही है। हे पुत्र ! इस समय तुम कहाँ रहते हो। हे मातः ! मैं यहीं काशी में कहीं रहता हूँ। ऐसा ! तो सुनो, वह काशी भी मेरी नगरी है और मैं वहाँ अन्नपूर्णा हूँ।।४३।।

**बुद्धौ तेऽस्तु यथा तथाऽखिलमिदं त्वां बोधये संश्रृणु**
**गङ्गाऽऽयाति हिमालयात् तदमृतस्वच्छाम्बु पीतं त्वया।**
**सेयं देवनदी स्वतोऽपि महिता देवीति सङ्गीयते,**
**तस्याः सोऽस्ति हिमालयोऽत्र जनको जानीहि तं दैवतम्।।४४।।**

हे पुत्र ! तुम्हारी बुद्धि जैसी है, वैसा ही तुम्हें बता रही हूँ, सुनो। गङ्गा हिमालय से आती हैं, उनका अमृततुल्य स्वच्छ जल तुमने पान किया है, वही यह देवनदी स्वयमेव पूजनीया देवी मानी जाती हैं। उन्हीं गङ्गा का वह हिमालय जनक है और उसे देव समझो।।४४।।

**किञ्चित् किञ्चिदिव प्रतीतिपदवीमायाति मातस्त्वया,**
**युक्त्या युक्तमभाणि किन्तु किमपि श्रुत्वा पुनर्धीयताम्।**
**यत्रेदं जनकत्वमस्तु तदिदं जीवद्वपुर्दैवतं**
**नेत्थं व्याप्तिरियं पदार्थनिचये नो चेत्सुराः स्युर्नगाः।।४५।।**

हे मातः ! तुमने युक्तिसङ्गत बात कही है, तुम्हारी बात कुछ-कुछ समझ में आ रही है, किन्तु कुछ सुनकर पुनर्विचार किया जाय। जहाँ जनकत्व है, वह जीवित शरीर वाला देव है। यदि पदार्थ समूह में यह व्याप्ति मानी जायेगी तो सभी पर्वत देव हो जायेंगे; क्योंकि सभी पर्वत किसी न किसी नदी या स्रोत के जनक हैं।।४५।।

**हंहो पुत्र ! कुतो नु सम्पठितवान् ! साधूक्तवान् युक्तिमत्**
**तर्के मे प्रतिभासि पण्डित इति स्वस्त्यस्तु ते श्रूयताम्।**
**जन्यत्वे जनकत्वमस्ति तदिदं तच्छक्तिमत् स्याद् ध्रुवं**
**तत्त्वं कालगतं विभुः स भुवने तस्याश्रयः सम्मतः।।४६।।**

हे पुत्र ! तुमने कहीं अध्ययन किया है; क्योंकि तुमने युक्तियुक्त बात कही है। मुझे लगता है कि तुम तर्कशास्त्र के पण्डित हो। तुम्हारा कल्याण हो, सुनो, उत्पाद्य वस्तु में जो उत्पादकता है, वह निश्चय ही उसकी शक्ति से सम्बद्ध है। तत्त्व (उत्पादकत्व-जनकत्व) कालगत है और वह भुवन में विभु (व्यापक) है। अतः उसी का आश्रय यह हिमालय सम्मत है।।४६।।

**मातः ! स्यादिति किन्नु तेन भवती दूरं प्रसङ्गाद् गता**
**देवत्वं हिमवत्यपास्तमिति तत्पक्षं निजं रक्षतु।**
**मैवं ब्रूहि सुत ! त्वमत्र विषये विद्वान् यथा भासि मे**
**[१]कालोऽयं हिमवत्प्रयोज्यविषयीभूतोऽस्ति मे बालक !।।४७।।**

हे मातः ! इससे क्या होता है, आप प्रसङ्ग से दूर चली गईं। हिमालय में देवत्व नहीं सिद्ध हो पाया, अतः पहले आप अपने पक्ष की रक्षा करें। हे पुत्र ! ऐसा मत कहो, तुम इस विषय में विद्वान् की तरह लग रहे हो। मेरे बच्चे ! यह काल हिमवत्प्रयोज्यविषयीभूत है।।४७।।

**मातस्त्वं गृहिणीव सम्भणसि किं ! बालोऽस्मि ते चेदहं**
**तत्र प्रत्ययमादधासि नियतं स्वल्पार्थकं[२] त्वं किमु ?**
**वादं नेच्छसि, नेच्छ, यच्छसि न चेत्साधूत्तरं याम्यहं**
**हंहो मे प्रियपुत्रक ! प्रियतया स्नेहार्थकः प्रत्ययः।।४८।।**

हे मातः! यदि मैं तुम्हारा बालक हूँ तो तुम गृहिणी की तरह क्यों बोल रही हो। क्या तुम उसमें स्वल्पार्थक प्रत्यय कर रही हो। वाद नहीं चाहती हो तो मत चाहो किन्तु यदि ठीक से उत्तर नहीं दोगी तो मैं जा रहा हूँ। अरे! मेरे प्रिय पुत्र ! प्रेम के कारण वह प्रत्यय स्नेहार्थक है।।४८।।

**नाहं भ्रामयितुं वदामि किमपि श्रुत्वा मनस्तोषय**
**त्वं मे साधुमतिर्विभासि मनसा सञ्चिन्त्य सन्तुष्यसि।**
**योऽयं पुत्र ! हिमालयः स हि दिवारात्रिद्वयस्योद्भवे**
**हेतुश्चैकतया मतो रविमयं सञ्चालयत्यञ्जसा ।।४९।।**

हे पुत्र ! मैं तुम्हें भ्रान्त करने के लिए नहीं कह रही हूँ। कुछ (तथ्य) सुनकर अपना मन सन्तुष्ट करो। तुम मेरे सुबुद्ध पुत्र हो, अतः सावधान चित्त से विचार करने पर सन्तुष्ट हो जाओगे। यह जो हिमालय है वह दिन और रात की उत्पत्ति में एक प्रकार से कारण है और यह सूर्य को निश्चय ही सञ्चालित कर रहा है।।४९।।

---

१. जन्यानां जनकः कालो जगतामाश्रयो मतः।। (न्यायसिद्धान्तमुक्तावली)
२. बालके 'क'प्रत्ययः स्वल्पार्थे स्नेहार्थे च भवति।

**साहाय्यं कुरुतश्च तौ तदनुजौ प्राच्यां प्रतीच्यामपि**
**भानोस्तावुदयास्तभूधरवरावाधारहेतूकृतौ ।**
**एते पादपराजिराजितधराधारा हिमाद्रिं श्रिताः**
**[1]कालो भानुसमाश्रितो भुवि ततोऽस्माकं पिता दैवतम् ।।५०।।**

हे पुत्र ! उस हिमालय के अनुज उदयाचल और अस्ताचल-ये दोनों पूर्व और पश्चिम में सूर्य के आधार कारण बनाये गये हैं। वृक्षसमूह से सुशोभित ये समस्त पर्वत हिमालय के अधीन हैं। काल, इस पृथ्वी पर सूर्य पर आधारित है। अतः मेरा पिता हिमालय देवता है।।५०।।

**हंहो पुत्रक ! तत्र मे जनिगृहं साऽहं स्थिरा, ते गुरुः,**
**शम्भुः सोऽपि हिमालये निवसति प्रीत्या मयाऽऽराधितः।**
**भूयो भूतगणाश्च पञ्चकलिता भूता इवात्रैव ते**
**देवास्तत्र गणाधिराजपितरं मां चार्थयन्तेऽनिशम् ।।५१।।**

हे पुत्र ! (हिमालय के घर) वहाँ मेरा जन्मगृह है, मैं वहीं स्थिर होकर रहती हूँ। जो मेरे द्वारा आराधित तुम्हारे गुरु (भगवान् शिव) हैं, वह भी हिमालय पर निवास करते हैं फिर पञ्चमहाभूतों (आकाश, तेज, वायु, जल और पृथ्वी) के समान भूतगण भी वहीं रहते हैं। समस्त देवगण वहाँ शिव जी की और मेरी अभ्यर्थना सदैव करते रहते हैं।।५१।।

**कालो यत्कलयेत्तदेव भुवने तस्याश्रयं संश्रयेत्**
**जन्यत्वं जनकत्वमित्युभयमप्यत्रैव संसज्जते।**
**योगासिद्धतया विकल्पितगतिः कालः स्वयं तत्र तद्**
**[2]योगाय प्रभवेदसौ ननु कथं ? पुत्रात्मना धीयताम् ।।५२।।**

---

१. भौगोलिक दृष्टि से सारे उत्तर स्पष्ट हैं, इससे शास्त्रीय पक्ष भी असङ्गत नहीं है-यह माता का समीचीन सिद्धान्त पक्ष है।

२. (क) योग, धारणा और समाधि के द्वारा आश्रय रूप से अथवा सम्बन्ध साधक रूप से या निरवधितानिर्वाह रूप से 'आ' अर्थात् चारों ओर से भूत, भविष्यत् तथा वर्तमान रूप से व्यापक होने के कारण यद्यपि यह काल सिद्ध है तथापि हिमालय कारण के साध्यतावच्छेदक कोटि से असम्बद्ध होने के कारण अथवा साध्यतावच्छेदकानवच्छिन्न होने के कारण इस काल की योगासिद्धि का हेतु होता है।

(ख) विकल्पितगतिः-विशिष्ट कल्प ही ब्रह्मा आदि की आयु के सूचक रूप से खण्डशः कल्पित माने जाते हैं। अतः उस रूप से गति (गमन) लोकाश्रयत्व का निर्वाह, योग से कल्पित रूप से असिद्ध होकर और पुनः चारों ओर से सिद्ध होकर भी व्यापक काल की सिद्धि द्विधा अविरुद्ध प्रतीत होती है किन्तु हिमालय में यह अन्यथा प्रतीत होती है।

काल जिसका कलन (गणना) करता है, वही जगत् में उसके आश्रय का संश्रयण करता है। कार्यत्व (जन्यत्व) और कारणत्व (जनकत्व) ये दोनों भी यहीं रहते हैं। किन्तु वह काल योग की असिद्धि के कारण स्वयं विकल्पित गति होकर उसके योग में कैसे संलग्न हो सकता है ? हे पुत्र ! (इसे) ध्यानपूर्वक समझो।।५२।।

**कालः खण्डितखण्डितात्मवपुषा यत्र स्थितिं न व्रजेत्**
**कालीनाथ इहास्ति तत्प्रशमितः कालो न संव्याप्नुते।**
**कुत्राप्याश्रयता न तस्य विमले स्वान्तेऽत्र तत्त्वाञ्चिते**
**भ्रान्तो मा भव पुत्र ! तर्ककलितां बुद्धिं विदूरात् त्यज ।।५३।।**

खण्ड-खण्ड शरीर वाला काल जहाँ (यहाँ) स्थिति नहीं बना पाता क्योंकि यहाँ कालीनाथ (शिव) विराजमान हैं। उनसे प्रशमित काल सम्यग् व्याप्त नहीं हो पाता। यहाँ तत्त्वाञ्चित विमल अन्तःकरण में उस काल की आश्रयता कहीं भी नहीं है। अतः हे पुत्र ! भ्रान्त न बनो, तार्किक बुद्धि का दूर से ही परित्याग करो।।५३।।

**श्रुत्वैतत्तव नूनमेव भविता चित्ते समाधिः स्वतः**
**पुत्र ! प्रेमणि सम्मतोऽसि मनसा शक्तिस्तवाङ्गीकृता।**
**साऽहं यत्कथयामि तत् समुचितं जातो विलम्बो महान्**
**त्वञ्चापि स्वयमप्यहं सुमनसौ तद् गच्छ नैजं गृहम् ।।५४।।**

यह बात सुनकर निश्चय ही तुम्हारे चित्त में स्वतः समाधान हो जायेगा। हे पुत्र ! तुम मेरे प्रीतिपात्र हो और हृदय से तुम्हारी शक्ति स्वीकार कर ली गयी। अतः मैं जो कहती हूँ, वह उचित है। बड़ी देर हो गई, तुम और हम स्वयं भी सन्मनस्क (प्रसन्नचित्त) हैं। अब अपने घर (आवास) जाओ।।५४।।

**मय्यासक्तमनाः सुनिर्मलमतिर्न क्वाप्यसौ भ्राम्यति**
**त्वं सम्यक्प्रतिभासि केवलभवज्जाले कपालीकृतः[१]।**
**शस्त्राशस्त्रि युधि स्मृतं श्रुतमिदं नास्ति क्वचित् पुत्रक,**
**वादोऽयं कलहाय मे सुत ! शृणु स्वान्तं समुन्मीलय।।५५।।**

---

१. कपालस्वरूप होकर उपेक्षित अथवा कपाली (शङ्कर) के द्वारा कृत (निर्मित) होकर भवज्जाल उत्पद्यमान बन्धन में निबद्ध हो।

मुझमें संलग्न चित्तवाला निर्मलबुद्धि (पुरुष) कहीं भ्रान्त नहीं होता। तुम सम्यक् प्रतीत हो रहे हो, केवल संसारजाल में कपालीकृत हो। यह शास्त्र पारस्परिक शस्त्रप्रहारजन्य युद्ध के रूप में नहीं जाना जाता है। हे पुत्र ! सुनो, यह वाद केवल कलह का कारण होता है, अतः अपने चित्त को शान्त उन्मीलित करो।।५५।।

**मातस्ते चरणारविन्दमधुरप्रस्यन्दमानामृत-**
**स्वादोल्लासमनोज्ञमानसवपुर्भृङ्गायते त्वत्सुतः ।**
**शस्त्राशस्त्रिकृतं श्रुतं न च,न चेत्थं स्यात्परं ते वचः**
**गीताशास्त्रतिरस्कृतिं भगवति! त्वंमा कृथाः, 'सा श्रुतिः' ।।५६।।**

हे मातः ! तुम्हारे चरणकमलों से झरते हुये मधुर अमृत के आस्वाद से निर्मल चित्त और शरीरवाला तुम्हारा पुत्र, भ्रमर का आचरण कर रहा है। शस्त्राशस्त्रिकृत श्रुत नहीं है–तुम्हारा यह वचन श्रेष्ठ नहीं है। हे देवि ! तुम गीताशास्त्र का तिरस्कार मत करो, क्योंकि वह श्रुति है।।५६।।

**भूयस्त्वं भ्रमसीव किन्नु किल तज्जन्यं न सम्मन्यतां**
**श्रौताचारनिगूढधर्मसुरभीभूतामृतं शाश्वतम्।**
**कर्मज्ञानजयोगमोक्षभगवत्साक्षात्कृतेर्दर्शनं**
**गीताशास्त्रमशेषकष्टभरितान्तर्भारतत्राणदम्[1]।।५७।।**

हे पुत्र ! तुम पुनः भ्रान्त हो रहे हो। वह (गीताशास्त्र) युद्ध न माना जाय (अपितु) वह वैदिक आचरण के निगूढ़ धर्म से सुगन्धित अमृत के समान शाश्वत है। कर्म, ज्ञानजन्य योग, मोक्ष तथा भगवत्साक्षात्कार का दर्शन है। गीताशास्त्र अशेष कष्ट से पूर्ण भारत को त्राण देने वाला है।।५७।।

**विश्वत्राणमपेक्षते तव सुत ! त्वं पूर्वमेवोक्तवान्**
**यत् त्राणाय च कल्पते ननु न तच्छस्त्रायितं संस्मृतम्।**
**गीताशास्त्रनिदर्शनं स भगवान् सूतायमानो हरिः**
**शस्त्रं न क्वचिदाददौ त्रिजगतां त्राणप्रदोऽयं स्वयम् ।।५८।।**

---

१. अशेष (सम्पूर्ण) कष्ट से भरित गीतान्तर्गत भारत (अर्जुन) का त्राण जैसे गीता के द्वारा हुआ वैसे ही भारत राष्ट्र का त्राण भी उसके द्वारा सम्भव है अथवा, अशेषकष्टभरित अन्तर्निष्ठ भारत (महाभारत युद्ध) से गीता द्वारा भारत (अर्जुन) का त्राण हुआ।

हे पुत्र ! तुम विश्व–त्राण चाहते हो–यह तुमने पहले ही कहा था। जो त्राण के लिये है वह शस्त्रायित नहीं होता। सूत का कार्य करने वाले वे भगवान् (कृष्ण) गीताशास्त्र के निदर्शन हैं, जिन्होंने कहीं शस्त्र नहीं उठाया क्योंकि वे त्रिलोकी–रक्षक हैं।।५८।।

**धन्यो धन्यतमोऽस्मि धन्यमखिलं ज्ञानं च ते भास्वरं**
**भास्वद्भूरिविभाप्रकाशनपरं मातः ! पराधीश्वरि !**
**शक्ते ! श्रीपरमे ! रमे ! सुरगणत्राणैकभूमिः स्वयं**
**ब्रह्मप्राणनचिन्मयि ! प्रतिभया हीनं सुतं रक्ष माम् ।।५९।।**

हे मातः ! मैं अत्यन्त धन्य हूँ और तुम्हारा समग्र देदीप्यमान ज्ञान भी धन्य है, जो अत्यन्त दीप्त प्रकाशपरक है। हे शक्तिश्रेष्ठे! लक्ष्मि ! तुम स्वयं देवगणों की रक्षा की आधारभूमि हो। हे ब्रह्मप्राणप्रदे चैतन्यस्वरूपिणि! प्रतिभाहीन मुझ पुत्र की रक्षा करो।।५९।।

**श्रीमन्मातरधीश्वरि ! क्व नु गता ? चक्षुः समुन्मील्य मे,**
**शक्तिस्त्वं परमा मता जगदिदं त्रातुं श्रुतौ संस्तुता।**
**पूर्वस्यां दिशि भानुमानुदयते लोकोऽखिलो भासते**
**हृद्देशे तमसावृते प्रतिभया को भासतां त्वामृते।।६०।।**

मेरी आँखें खोलकर, हे मातः अधीश्वरि ! कहाँ चली गई? तुम्हीं परमशक्ति मानी जाती हो। इस संसार की रक्षा करने के लिए वेदों में स्तुत हो। पूर्व दिशा में सूर्य उगता है, जिससे सारा लोक प्रकाशित हो जाता है। अज्ञाननान्धकार से घिरे हुए हृदय में प्रतिभा रूस से तुम्हारे विना कौन प्रकाशित हो सकता है।।६०।।

।।शक्तिशतक में गर्भस्तुतिरूप 'पृच्छास्तुति' समाप्त हुई।।

**कष्टं कष्टमतीवकष्टमखिलानन्दप्रदे ! श्रीमति !**
**प्रादुर्भूतमनन्तमत्र जगति प्रोद्दण्डशस्त्रासुरैः।**
**सर्वस्मात् प्रमुखो विशेषघटितप्राणाधिको विश्वराट्**
**तीक्ष्णान्तः परमाणुकासुरवरो लब्धावतारो नवः।।६१।।**

हे अखिलानन्दप्रदे ! श्रीमति ! इस संसार में अति उद्दण्डशस्त्ररूपी असंख्य असुर उत्पन्न हो गये हैं। उनमें सबसे प्रधान, विशेष शक्तिमान्, तीक्ष्ण तत्त्व वाला विश्वराट्, सर्वश्रेष्ठ परमाणुकासुर ने नवीन अवतार ग्रहण कर लिया है।।६१।।

**विश्वं सर्वमसौ जिघांसति मुखं व्यादाय विद्योतते**
**नैके तस्य वशानुगा अनुचराः क्षेप्यासुराः क्षिप्रगाः।**
**व्याहन्तुं विहरन्ति ते दिवि दिवारात्रं भृशं त्रासदाः**
**यानानि प्रमुखानि सन्ति नभसि प्रोद्यन्ति विद्युन्निभम् ।।६२।।**

यह (परमाणुकासुर) मुँह खोले हुए सम्पूर्ण जगत् को खा जाना चाहता है। इसके साथ ही इसके वशवर्ती अनेक अतिवेगशील क्षेप्यास्त्ररूप असुर सेवक, अत्यन्त भयप्रद, आकाश में चारों ओर प्रहार करने के लिये विचरण करते रहते हैं तथा बिजली के समान चमकने वाले अनेक विशिष्ट यान भी नभोमण्डल में मँडरा रहे हैं।।६२।।

**शक्ते! श्रीमति ! येऽसुराः समभवन् शुम्भादयो वा पुरा**
**तेष्वेकोऽपि न शक्ष्यति प्रतिभटम्मन्यो भवेन्नो ध्रुवम्।**
**जाग्रत्यत्र पराणुकासुरवरे जागर्ति नो मानवो**
**गर्जत्यत्र च तत्र लौकिकजनः सन्तर्जितो मूर्च्छति ।।६३।।**

हे श्रीमति महाशक्ते ! पहले जो शुम्भादि असुर हुए उनमें से कोई भी परमाणुकासुर का प्रतियोद्धा नहीं हो सकता। इस परमाणुकासुर की आँखें खुली रहने पर मनुष्य नहीं जाग पा रहा है। वह संसार में सर्वत्र गर्जन कर रहा है और लोग भयभीत तथा मूर्च्छित हो रहे हैं[१]।।६३।।

---

१. इस जगत् में परमाणु क्षेप्यास्त्र आदि को महासुरों (महा+असुरों) के समान उत्प्रेक्षित करके कवि उनके निवारण के लिए माता शक्ति से प्रार्थना कर रहा है ताकि जगत् का विध्वंस रुक सके और विश्व-शान्ति प्रतिष्ठित हो।

**'क्यूबा'काण्डनिदर्शनं[1] भगवति ! त्वेकैकदिग्दर्शनं**
**तन्मात्रेण विपद्यमानमखिलं विश्वं तदासीदिदम्।**
**भूयस्तस्य विजृम्भणं किल वियन्नामाख्यसङ्ख्येऽभवत्[2]**
**सम्प्रत्यप्यनिशं क्वचित्क्वचिदपि प्रोद्दाममुज्जृम्भते।।६४।।**

हे भगवति ! क्यूबा की घटना एक उदाहरण है। उस समय यह समस्त संसार कितना संत्रस्त हो उठा था। उसके बाद उसके (परमाणु बम) प्रयोग की आशङ्का पुनः वियतनाम युद्ध में हो गई थी। इस समय भी निरन्तर कहीं न कहीं उसकी विभीषिका आसन्न हो जाती है।।६४।।

**पौलस्त्योऽभवदद्भुतोऽसुरवरो रामायणं सम्बभौ**
**गीताभारतमित्युभेऽप्यभवतां दुर्योधनोऽभूद् यदा।**
**शुम्भादिष्वपि सत्सु सम्बभुरथो नानापुराणान्यपि**
**सत्स्वेतेष्वसुरेषु नैव जगती नो वा भवेत् किञ्चन।।६५।।**

अद्भुत असुरराज रावण जब उत्पन्न हुआ था तब रामायण की उत्पत्ति हुई थी। जब दुर्योधन पैदा हुआ तब गीता और महाभारत की रचना हुई। शुम्भादि दैत्यों के होने पर विविध पुराणों की रचना हुई किन्तु उक्त असुरों की उपस्थिति में न तो यह पृथ्वी रहेगी और न ही कुछ और (काव्यादि) सम्भव हो सकेगा (क्योंकि ये परमाण्वायुधरूप असुर समूल विश्व का विनाश कर देगें।।६५।।

**काञ्चीमञ्च न रञ्चमात्रमधुना मातर्न केयूरकं**
**नो वा कङ्कणमङ्कशायिनमपि प्रोज्झित्य पुत्रं निजम्।**
**दूराद्दूरमुपेक्ष्य भक्तनिकरं यैस्त्वं मुधाऽऽराध्यसे**
**कार्येऽस्मिन् भवरक्षणे भगवति ! द्रागुद्यता तिष्ठतात्।।६६।।**

---

१. सम्भवतः सन् १९६१-६२ ई० में 'क्यूबा' की समस्या को लेकर अमेरिका और सोवियत संघ (रूस) के मध्य विवाद उठ खड़ा हुआ था। उस समय अमेरिका द्वारा परमाणुशस्त्र के प्रयोग की घोषणा से संसार भर में महान् आतङ्क व्याप्त हो गया था। ऊपर इसी घटना की ओर सङ्केत किया गया है। ज्ञातव्य है कि उस समय, केनेडी अमेरिका के राष्ट्रपति थे।

२. अमेरिका ने वियतनाम देश में भी दशाधिक वर्षों तक युद्ध किया था और उसमें भी भीषण संहारक आयुधों का प्रयोग किया गया था। इसके अतिरिक्त द्वितीय विश्वयुद्ध में अमेरिका ने जापान के नागासाकी और हिरोशिमा पर अणुबम गिराये थे। अभी हाल में (खाड़ी) ईराक युद्ध में भी क्षेप्यास्त्रों का प्रयोग किया गया था।

हे मातः ! इस समय रञ्चमात्र भी समय काञ्ची (करधनी) को सम्भालने में मत लगाओ और न ही केयूर (बाजूबन्द) को पहनने में विलम्ब करो। कङ्गन को भी मत पहनो। गोद में सोये अपने पुत्र को छोड़कर आराधना करते हुए भक्तसमूह को दूर-दूर तक उपेक्षित करके हे भगवति! सद्यः करणीय इस (विश्वत्राणरूप कार्य) में शीघ्र उद्यत होकर खड़ी हो जाओ।।६६।।

**तत्ते स्मारयितुं स्मरामि शुभदे ! सम्यक् समाकर्ण्यतां**
**जातः कश्चन 'हिटलरो'ऽसुर इव प्राग् 'जर्मनी'शो भुवि।**
**तद्रक्षःप्रखराणुकास्त्रसदृशात् प्रोद्दण्डमुज्जृम्भणान्**
**नागासाकिहिरोशिमानगरयोर्नाशोऽभवत्सङ्गरे[१]।।६७।।**

हे शुभदे ! यह बात तुम्हें स्मरण दिलाने के लिए उठा रहा हूँ, ध्यान से सुना जाय। जर्मनी देश का स्वामी शासक हिटलर नामधारी राक्षस कल्प कुछ काल पूर्व इस पृथ्वी पर पैदा हुआ था। तीव्र अणुकास्त्रसदृश उस राक्षस की उद्दण्ड चेष्टा के कारण नागासाकी तथा हिरोशिमा जैसे (जापान देश के) नगरों का सङ्ग्राम में नाश हो गया।।६७।।

**दैवात्तत्परमाणुकासुरजनिर्नाभूत्तदानीमहो !**
**नो चेद् देवि ! तव स्तुतिप्रकरणं नावश्यकं स्यादिह।**
**त्वत्प्रस्तावक एव चैष यदि वा नैवाभविष्यद् यदा**
**तत्ते प्रस्तुतिमेव सोऽयमधुना नैवाकरिष्यत्तदा ।।६८।।**

हे देवि ! भाग्य से उस समय इस परमाणुकासुर का जन्म ही नहीं हुआ था, अन्यथा तुम्हारा यह स्तुतिप्रकरण ही आवश्यक न होता क्योंकि जब तुमसे प्रस्ताव करने वाला यह जन (अर्थात् मैं) ही न हुआ होता तो इस समय यह तुम्हारी प्रकृष्ट स्तुति ही न कर पाता।।६८।।

---

१. द्वितीय विश्वयुद्ध में हिटलर के विजय अभियानों की प्रतिक्रिया में मित्रराष्ट्र (ब्रिटेन, रूस तथा अमेरिका) एकजुट हुए और अमेरिका ने नागासाकी और हिरोशिमा नगरों पर अणुबम गिराकर उनको मटियामेट कर डाला था-यह इतिहास सिद्ध घटना आज से लगभग ४६ वर्ष पूर्व घटित हुई थी।

**नैवावक्ष्यदिदं वचः कटु भवत्कर्णे कदाचित्तव**
**नैवाद्रक्ष्यदिदं जगच्च विपदाक्रान्तं मुमूर्षावृतम्।**
**नैष्यद् देवि ! तवापि भारवहनं कल्याणवार्ताश्रुतेः**
**नैवागास्यदशेषतोऽपि भुवनं त्वन्नामसङ्कीर्तनम् ।।६९।।**

और तब कदाचित् आपके कानों को कटु लगने वाली यह बात न कह पाता। साथ ही यह विश्व विपत्तियों से घिरा हुआ मरणासन्न न दिखाई पड़ता। हे देवि ! तुम्हारे कल्याणवार्ताश्रवण के भारवहन को न प्राप्त होता तथा सम्पूर्ण भुवन तुम्हारा नामसङ्कीर्तन भी न करता।।६९।।

**नो चैवावततितीर्षया प्रकटनं तेऽसेत्स्यदत्रावनौ**
**नो वाऽस्थास्यदियं स्थितिस्तव शुभे ! गीतापुराणादिषु।**
**न प्राच्छत् परिपृच्छया निजजनं कष्टे गतं श्रीमती**
**नैवाधास्यदिदं पदं तव भुवि क्वापि प्रतिष्ठापितम् ।।७०।।**

(इतना ही नहीं) इस पृथ्वी पर अवतरण की इच्छा से होने वाला आपका प्राकट्य न होता तथा हे शुभे ! गीता–पुराणादि में तुम्हारी यह स्थिति भी न होती। आप कष्ट में पड़े अपने जन से पूछने की भावाना से कुछ पूछ भी न पातीं और आपका यह पद (स्थान) पृथ्वी पर कहीं प्रतिष्ठापित न होता।।७०।।

**देवि ! प्रोन्नतमस्तको गिरिवरो द्रागेव निर्नङ्क्ष्यति,**
**द्रागेव प्रथिताऽखिलाऽपि वसुधाऽधस्तात्तलं द्रक्ष्यति।**
**तत्फूत्कार उदित्वरे प्रभवति प्रोच्चैर्जगद् धक्ष्यति**
**जन्तुः क्वापि कुतोऽपि ते स्तुतिमिमां शब्देन नो वक्ष्यति ।।७१।।**

हे देवि ! ऊँचे शिखरवाला यह हिमालय शीघ्र ही सर्वथा नष्ट हो जायगा, शीघ्र ही यह सारी धरती पाताल में चली जायेगी। (परमाणुकासुर के) तीव्र फूत्कार होते ही यह संसार जल जायगा और कोई भी प्राणी शब्दों से तुम्हारी स्तुति नहीं कर पायेगा।।७१।।

**साक्षात्कालकृपाणकर्षदखिलप्राणानिव प्रोद्गतान्**
**देव्येतानणुकासुरान् शिरसि तान् प्रोज्जायमानानपि।**
**अन्याँस्तान् प्रजनिष्यमाणघटकान् प्रागुन्मदिष्णूनिमान्**
**दर्शं दर्शममर्षपूर्णहृदयो दूयेतरामीश्वरि ! ।।७२।।**

हे ईश्वरि ! देवि ! प्रत्यक्ष काल के कृपाण की तरह सम्पूर्ण प्राणों को खींचने में उद्यत शिर पर विराजमान तथा भविष्य में उत्पन्न होने वाले उन्मत्त इन अणुकासुरों को देख–देख कर अमर्षपूर्ण वाला मैं अतिशय परिताप का अनुभव कर रहा हूँ।।७२।।

**क्व त्वं क्वाहमये मदम्ब ! भुवने क्वासौ गणेशो गुहः**
**क्वास्तु प्रोच्चहिमालयो निशिचरेष्वेतेषु जाग्रत्स्वपि।**
**क्वाब्धेः स्यादुपलब्धिरेव महिते ! संरक्षिताऽस्यां क्षितौ**
**क्वासौ भारतभारतीयमहिमोद्गाता कविर्मादृशः।।७३।।**

हे मेरी जननि ! इस भुवन में कहाँ तुम, कहाँ मैं, कहाँ गणेश और कार्तिकेय, कहाँ ऊँचा हिमालय, कहाँ समुद्र की सत्ता और कहाँ यह भारत तथा भारत की महिमा का उद्गायक मेरे जैसा कवि, इस पृथ्वी पर इन निशाचरों के विद्यमान रहते हे पूजनीये ! कोई भी तो सुरक्षित नहीं है।।७३।।

**नैके सम्प्रति हिट्लराधिकतरप्राशस्त्यपूर्णास्त्रकृद्**
**विज्ञानाम्बुधिकूलकर्षणरता लङ्काधिनाथा इव।**
**लङ्कातङ्कपराः[१] सुरादिनगरीशङ्काकरास्ते नराः**
**सर्वत्र प्रसरीसरन्ति भुवनेऽलङ्कातराः प्राणिनः।।७४।।**

इस समय अनेक हिटलर से भी अधिक प्राशस्त्यपूर्ण अस्त्रों के निर्माण करके विज्ञानसिन्धु के किनारों को विध्वस्त करने में तत्पर, रावणों की तरह, लङ्का को आतङ्कित करने में तत्पर तथा देवादि की नगरियों को भी आशङ्कित करने वाले नर-राक्षस चारों ओर संसार में व्याप्त हो गयें हैं और प्राणिसमुदाय अतिशय कातर हो उठा है।।७४।।

---

१. लङ्काशब्दोऽयमुपलक्षणतयोपात्तो लोकार्थको ज्ञेयः (लङ्का शब्द यहाँ लोकार्थ को व्यक्त करने में उपलक्षण है)।

**मा भूदम्ब ! विलम्बलम्बनमिदं मा भूत्तवान्या गतिः**
**मा भूदुत्तमभारतावनिरियं निःशेषिताऽऽत्मश्रिया।**
**मा भूदत्र नगाधिराजपदवी संविच्युता कुत्रचिद्**
**मा भूत्ते स्तुतिनाश एष गिरिजे ! माभूत् क्षितेः सङ्क्षतिः ।।७५।।**

हे अम्ब ! (तुम्हारे आगमन में) यह विलम्ब का आलम्बन न हो (टालमटोल न हो), जिससे तुम्हारी अन्य गति न हो, यह भारत की श्रेष्ठ भूमि कान्तिहीन न हो जाय, यह हिमालय की शृङ्गमाला कहीं ध्वस्त न हो जाय, तुम्हारी इस स्तुति का नाश न हो जाय तथा हे गिरिजे ! कहीं इस पृथ्वी का सर्वथा नाश न हो जाय।।७५।।

**मा भूदुत्तमदेवते ! तव पुराऽऽविर्भूतिवार्ता वृथा**
**मा भूत् कान्तकलेवरेण विहिता रामेण चर्चा मृषा।**
**मा भूदम्ब ! कदम्बलम्बितसखीचीरापहारो मुधा,**
**मा भूद् देवगणापमानगणना मा भून्ममाप्रार्थना ।।७६।।**

हे उत्तमदेवते ! तुम्हारी उत्पत्ति-कथा कहीं व्यर्थ न हो जाय! कान्त शरीर वाले राम के द्वारा की गई चर्चा कहीं मृषा (झूठी) न हो जाय ! हे अम्ब ! कदम्ब वृक्ष पर लटकते हुए चीरों के अपहरण की (पौराणिक) कथा कहीं असत्य न हो जाय ! देवगणों के अपमान की गणना न हो जाय और कहीं मेरी प्रार्थना अप्रार्थना न हो जाय।।७६।।

**मा भूदत्र विराजमानमनिशं क्षीणं जगज्जीवनं**
**मा भून्मातरशेषभारतगिरा गीता विगीता श्रुतिः।**
**मा भूदुन्नतसिंहवाहिनि ! महाशक्ते ! त्वयि प्रोच्चकैः**
**सत्यामत्र परत्र वा त्रिभुवने दुश्चेष्टमानो जनः ।।७७।।**

यहाँ अनवरत विराजमान जगत् का जीवन क्षीण न हो जाय, हे मातः ! सम्पूर्ण भारत की वाणी द्वारा गीता श्रुति विगीता (निन्दिता) न हो जाय तथा हे सिंहवाहिनि महाशक्ते ! तुम्हारे रहते यहाँ या अन्यत्र तीनों लोकों में लोग दुश्चेष्टा करने वाले न हों।।७७।।

स्याच्चेत् कोऽपि तथा व्यथाप्रद इह क्वाप्यत्र सत्प्राणिनां
सद्यस्तुष्यतु स स्वयं न जगतीकल्याणमाबाधताम्।
भूयांसो यदि सन्ति हन्त ! गिरिजे ! सन्तः क्रियन्तां समे
श्यामे ! श्यामलसस्यशालिलसिता स्यादम्बरान्ताम्बरा।।७८।।

हे श्यामे ! यदि इस संसार में कहीं कोई सज्जनों को व्यथाप्रद हो तो वह स्वयं शीघ्र तुष्ट हो जाय तथा जगत् का कल्याण न बाधित हो और, यदि अनेक कष्ट देने वाले हों तो हे गिरिजे ! वे सभी सज्जन बनाये जाँय। हे जननि ! आकाशपर्यन्त यह अम्बरा (पृथ्वी) हरे-भरे धान्यों से सुशोभित हो।।७८।।

भूयाद् भूरिसमृद्धिवृद्धिभरिता सम्पद्रता भूरियं
भूयादुत्तरदिग्दिगीशसहितः श्रीमान् नगेशोऽच्युतः।
भूयाद् भूय इह प्रभूतरचनोद्वाहादिकर्मापि ते
भूयासुः परितोऽपि शान्तिसरितः सद्यो वहन्त्यः सदा ।।७९।।

अतिशय समृद्धि तथा वृद्धि से सम्पूर्ण सम्पत्तिशालिनी यह भूमि हो। दिशाओं और दिशाओं के स्वामिओं सहित हिमालय च्युत (क्षीण) न हो। पुनरपि तुम्हारा प्रभूत रचनापूर्ण उद्वाह आदि कर्म भी हो तथा चारों ओर शीघ्र सदैव बहती हुई शान्ति-सरितायें हों।।७९।।

भूयात्तेऽपि च जन्म पर्वतगृहे भूयाच्च दिव्योत्सवः
दासस्ते किल कालिके ! कविरसौ भूयात्तव स्तावकः।
भूयान्मातरधीश्वरि ! 'प्रतिमहाकाव्यं' न तत्सम्भवं
भूयात्तेन महात्मना विरचितं तन्नामकं 'शाम्भवम्' ।।८०।।

तुम्हारा भी पर्वतराज के घर जन्म हो और दिव्य उत्सव हो। हे कालिके ! तुम्हारा वह सेवक कवि (कालिदास) तुम्हारी स्तुति करनेवाला हो। हे मातः ! अधीश्वरि ! तदुद्भूत तद्विरचित वह 'कुमारसम्भव' काव्य प्रतिकूल महाकाव्य न हो[१], प्रत्युत उस महात्मा कवि के द्वारा 'शाम्भवम्' नामक महाकाव्य की रचना की जाय।।८०।।

---

१. पार्वतीपरमेश्वर के सम्भोग का वर्णन करने के कारण महाकाव्यगत प्रतिकूलता को इंगित किया गया है।

**सञ्जाते भुवि 'शाम्भवे' स गिरिजे ! नूनं कुमारो भवेद्**
**नासौ तारकसङ्गरे क्षततनुः स्याद् वा नवीनीकृतः।**
**स्याद् वा 'हारविहारभारवहनं' सम्यक्परिष्कारितं**
**स्याद् वा त्वं कविसन्मतेः कृतिगता लोकत्रयीनायिका ।।८१।।**

हे गिरिजे ! इस पृथ्वी पर 'शाम्भव' महाकाव्य सम्पन्न हो जाने पर कुमार (कार्तिकेय) निश्चित उत्पन्न हों और वे तारकासुर के साथ युद्ध में क्षत शरीर वाले न हों। वे सर्वथा नवीन स्वरूप वाले हों। हार–विहार–भार का वहन सम्यक् परिष्कृत रूप में वर्णित हो तथा कवि (कालिदास) की सद्बुद्धि से विरचित उक्त महाकाव्य में तुम त्रिलोकी की नायिका के रूप में चित्रित होओ।।८१।।

**दिव्यस्वर्गसमृद्धिसिद्धिसहिताः सन्तो महान्तः सुराः**
**सम्भूय स्वयमेव शम्भुसदने निस्यन्दमानापगे।**
**चञ्चद्वारिसुधाशिनां सुमनसां हंसादिकानां प्रिये**
**रम्ये मानसरोवरे शिवधिया सिस्नासवः स्युः समे ।।८२।।**

सज्जन तथा श्रेष्ठ देवगण प्रवहमान देवनदी-संभावित शम्भुसदन कैलास में दिव्य स्वर्गिक समृद्धियों एवं सिद्धियों से पूर्ण स्वयं ही एकत्र होकर सुशोभित हों तथा सभी लोग चञ्चल सलिलामृत का पान करने वाले सुमनस्क हंसादिकों के प्रिय मनोहारी मानसरोवर के जल में कल्याणकामना से युक्त होकर स्नानाभिलाषी हों।।८२।।

**सेयं भारतभारती पुनरियं शङ्खध्वनिं तन्वती**
**मन्वाना निजगौरवं च जगतीं कुर्यात्प्रतिष्ठाङ्कितम्।**
**श्रौतं तत्त्वमुदेतु पूर्णमयतां लोकः सुखं सन्ततं**
**भूयासुश्च शिवे ! समेऽपि सुधियः साम्यैकदिग्दर्शिनः ।।८३।।**

यह भारत की सरस्वती पुनः शङ्खध्वनि का विस्तार करती हुई, अपना गौरव मानती हुई जगती को प्रतिष्ठाङ्कित करे। पूर्ण वैदिक तत्त्व उदित हो, संसार निरन्तर पूर्ण सुख को प्राप्त करे तथा हे शिवे ! सभी सुधी-जन समतासंवलित दिग्दर्शी बनें अर्थात् समत्वदर्शन से युक्त हों।।८३।।

**काशी शम्भुपुरी परेशनगरी प्रेतानपीहागतान्**
**क्लिष्टान् तानपि कृष्णकृष्णचरितान् सत्कृत्य संतारयेत्।**
**मातस्त्वं मधुरामृतोपमपयःपूरोल्लसन्निर्भर–**
**स्रोतस्स्तोमसमाप्लुतं नवनुतं स्तन्यं शिशून् पायय ।।८४।।**

और यह परेश की नगरी शम्भुपुरी काशी, यहाँ आये दुःखी प्रेतों, जो काले चरित्र वाले हैं, को कृष्ण के चरित्र से सत्कृत करके तार दें और हे मातः ! तुम मधुर अमृततुल्य दुग्ध-प्रवाह से परिपूर्ण अजस्र स्रोतःपुञ्ज से आप्लावित नवनुत स्वकीय स्तन्य (दुग्ध) को अपने बालकों को पिलाओ।।८४।।

**श्रीश्रीशङ्करसङ्गवासिनि ! महाशक्ते ! समुद्यद्रिपोः**
**शुम्भस्यान्तविधायिनि ! प्रशमितध्वान्ते ! महाम्बाम्बिके!**
**सर्वं साधुतरं तदैव भविता स्याच्चेद् भवत्याः कृपा**
**नो चेद् हुङ्करणात् पराणुजनितात् किं स्यान्न जानेतराम्।।८५।।**

हे शङ्करसङ्गवासिनि ! महाशक्ते ! समुच्छ्रिङ्खल शत्रु शुम्भ का वध करनेवाली ! अन्धकारनाशिनि ! महाम्बाम्बिके ! यदि आपकी कृपा होगी तो सब कुछ सुन्दरतर होगा और यदि कृपा न हुई तो परमाणुशस्त्रजनित हुङ्कार से क्या होगा–मैं नहीं जानता।।८५।।

**एते चाणुकराक्षसानुवशगाः केचित्स्वयं भीरवः**
**प्रत्यक्षेण गभीरशान्तमतयो विज्ञानवीरोत्तमाः।**
**सङ्घे कुत्रचिदेत्य विश्वरसिकैस्तैः शान्तिवार्ताप्रियैः**
**भूयो नाणविवस्त्रनिर्मितिरिहास्तु प्रायशो भण्यते।।८६।।**

परमाणुकासुरों के वशवर्ती ये कुछ लोग स्वयं डरे हुए, प्रत्यक्षरूप से, गम्भीर-शान्त-बुद्धिवाले, श्रेष्ठ विज्ञानवीर हैं। किसी सङ्घ (राष्ट्रसङ्घ) में एकत्र होकर विश्वरसिक वे शान्तिवार्ता-प्रेमिजन वार–वार कहते हैं कि इस संसार में पारमाणविक शस्त्रों का निर्माण बन्द होना चाहिये।।८६।।

**यावत्तत्र तदीयसम्भणनजः शब्दो जनैः श्रूयते**
**तावत् तद्गृहदेशजैः प्रकुशलैरन्यास्त्रमुन्नीयते।**
**एवं काऽपि परम्परैव सुबहोः कालाच्च तैश्चाल्यते**
**चित्रं कूटकलाप्रवीणमतिभिर्विश्वं परं पाल्यते ।।८७।।**

जब तक उसका वह कथित शब्द (परमाणुशस्त्रनिर्माण-विरोध का) लोगों द्वारा सुना जाता है,तब तक उनके गृहदेश में उत्पन्न श्रेष्ठ कुशल उत्पादक (वैज्ञानिक) अन्य अस्त्र बना देते हैं।इस तरह उनके द्वारा लम्बे समय से (नाटकीय) परम्परा चलाई जा रही है। कूटनीति-प्रवण उन (महाशक्तियों) के द्वारा (इस प्रकार से) विश्व की रक्षा की जा रही है – आश्चर्य है।।८७।।

**शान्तिः शान्तिरिहास्तु वादमनिशं विस्तारयन्तोऽप्यमी**
**कृष्णो गौर इति प्रवर्णघटनामात्रेण निघ्नन्त्यहो !**
**मातस्तद्भृशदारुणं जगति ते चीत्कारमातन्वते**
**कुत्राप्यद्य कमप्यलं जनपदं द्राक्कन्दरीकुर्वते ।।८८।।**

इस संसार में निरन्तर शान्ति-शान्ति का मिथ्यावाद फैलाते हुये ये महाशक्तियों के प्रशासक, काले और गोरे की प्रबल जाति-भावना मात्र की सङ्कीर्णता से शान्ति का गला घोंट रहे हैं। हे मातः ! इस जगत् में वे अत्यन्त दारुण चीत्कार कर रहे हैं। आज वे किसी भी सम्पन्न जनपद को कन्दरा बना दे रहे हैं।।८८।।

**आद्ये! देवि! जगद्विनाशनपरा एते भयङ्कारकाः**
**सर्वत्र प्रभविष्णवो विदधते लोकान् निजेच्छानुगान्।**
**एते विश्वविपद्विधानपटवो विष्वक्प्रसारोत्सुकाः**
**जाताः सम्प्रति मानवाः प्रकुटिलान्तर्भावतो दानवाः ।।८९।।**

हे आद्ये! देवि! ये भयकारक, जगत् के विनाश में संलग्न, सर्वत्र प्रभविष्णु लोकों को अपनी इच्छा के अनुसार धारण करते हैं। सर्वत्र प्रसारोत्सुक हैं। वस्तुतः विश्वविपत्तिविधान में पटु ये मानव सम्प्रति अपनी कुटिल भावनाओं के कारण दानव हो रहे हैं।।८९।।

**किन्त्वेतानपि सन्मतीन् शुभगतीन् भूतज्ञविज्ञानिनः**
**कर्तुं कारयितुं च देवि! परितस्त्वामेव याचे पुनः।**
**नाहं कोऽपि न नामतोऽपि जगति स्थानं क्वचिल्लब्धवान्**
**सोऽहं केवलपुत्रकस्तव परं पीडा ममैतान् प्रति ।।९०।।**

किन्तु हे देवि! इन भौतिक विज्ञानविदों को सुबुद्धि और सद्गति वाला बनाने के लिए पुनः तुमसे ही याचना कर रहा हूँ। मैं कोई नहीं हूँ, इस जगत् में कहीं स्थान भी नहीं पा सका हूँ। वह मैं केवल आपका पुत्र हूँ और इन (भटके हुए) लोगों के लिए मेरे मन में अत्यन्त पीडा है।।९०।।

**संसारक्षयकारिभिः स्वयमहो ! क्वात्मारिभिः स्थास्यते?**
**नो जानामि तदा भवानि! न भवान्येतन्महाश्चर्यकम्।**
**रक्षैतान् गिरिजे ! पुनः पुनरपि त्वां प्रार्थये साञ्जलिः**
**रक्षामाशु ममापि तेन कुरुतादम्ब ! त्वमाविर्भव ।।९१।।**

हे भवानि ! संसार का विनाश करने वाले, अपने ही शत्रु इन परमाणु वैज्ञानिकों के द्वारा स्वयं ही कहाँ रहा जायगा–यह नहीं जानता। क्योंकि उस महाविनाश के बाद मैं भी कहाँ रहूँगा। अतः हे गिरिजे ! साञ्जलि तुमसे पुनः पुनः प्रार्थना कर रहा हूँ कि इनकी रक्षा करो तथा मेरी भी रक्षा करो। हे अम्ब ! तुम शीघ्र प्रकट हो जाओ।।९१।।

**शान्तिः साम्यमुदेतु मानवकुलं कल्याणमासादयेद्**
**विश्वं विष्वगिहोद्भवल्लयविषज्ज्वालां न चालोकयेत्।**
**सेयं भारतभूश्च भूसुरवरैर्विज्ञैः सदाभासयेत्**
**दिव्यज्योतिरवाप्य दुर्लभतरा शान्तिश्चिरं रञ्जयेत् ।।९२।।**

शान्ति और साम्य उदित हो, मानवसमूह कल्याण प्राप्त करे, चतुर्दिक् विश्व, उत्पन्न होती हुई विनाशविष की ज्वाला न देखे, यह भारत की धरती विद्वान् देवत्वभावापन्न लोगों से सर्वदा सुशोभित हो, दिव्य ज्योति प्राप्त कर दुर्लभा शान्ति चिरस्थायिनी विराजमान हो।।९२।।

**दीव्यन्तु प्रथिताम्ब ! शम्भुसहिता देवा जगन्मण्डले**
**सन्त्वेताः सकलाः स्त्रियस्त्रिभुवनैश्वर्यप्रभाभास्वराः।**
**भान्त्वेते मनुजा यथैव मनुजाः स्वेषु प्रियाः सानुजा**
**नश्यन्त्वाशु च विश्वमानवयमाकारा इवैतेऽसुराः ।।९३।।**

हे सुख्यात मातः! शम्भुसहित सारे देवगण संसार में देदीप्यमान हों, ये सारी नारियाँ त्रिभुवन की ऐश्वर्य प्रभा से प्रभासित हों। ये सानुज (बन्धुजन सहित) मनु के वंशज वास्तव रूप के वंशज (मानव) बनें और विश्वमानवों के लिए यमराज के प्रतिरूप ये राक्षस (पारमाणविक शस्त्र) शीघ्र ही विनष्ट हों।।९३।।

**शश्वद्भारतवासिनोऽत्र मिलिताः सौहार्दसंस्कारिताः**
**कौटिल्यं[१] किल शास्त्रमात्रलिखितं जानन्त्वमी धीधनाः।**
**देवान् भावयता जनेन विबुधाकारेण देदीप्यतां**
**राष्ट्रं नाम गृहं यथा मतिमतां सञ्ज्ञायतां श्रीमताम् ।।९४।।**

इस जगत् में निरन्तर भारतवासी मैत्रीभावापन्न मिलकर रहें और ये बुद्धि के धनी कौटिल्य को शास्त्रमात्र में लिखा हुआ जानें। देवाकार लोग देवों की अर्चना करते हुए सुशोभित हों। साथ ही श्रीसम्पन्न बुद्धिमान् लोगों को समूचा राष्ट्र एक गृह के समान प्रतीत हों।।९४।।

**सद्योऽन्योन्यमुपेत्य नीतिनिपुणा राष्ट्रैकरक्षाव्रताः**
**सन्तः सन्त इवात्र सन्तु भुवने लोकानुकूलोन्मुखाः।**
**सर्वत्रास्तु च साधुशीलजनतातन्त्रात्मकं शासनं**
**धर्मे स्यान्निरपेक्षकं परमिदं स्यात् स्नेहसापेक्षकम् ।।९५।।**

संसार में शीघ्र ही परस्पर राष्ट्र की रक्षा के व्रती, नीतिनिपुण लोग सन्तों का आचरण करते हुए लोकानुकूल उन्मुख हों। सर्वत्र साधु शीलसम्पन्न जनतन्त्रात्मक शासन हो और यह शासन धर्मनिरपेक्ष हो पर स्नेह-सापेक्ष हो।।९५।।

**सर्वोऽप्यस्तु जगद्विधाननिपुणो विश्वार्थनिर्देशकः**
**सर्वः सर्वसमर्थनाय किमपि ज्योतिर्दधात्वात्मनि।**
**सर्वः सर्वनिदर्शनानि परितः स्नेहान्वितो दर्शये-**
**च्छात्रश्छात्रधिया गुरुर्गुरुधिया शास्त्राणि संरक्षतु ।।९६।।**

---

१. कौटिल्यकृतमर्थशास्त्रं (नीतिशास्त्रं) जगति विश्रुतम् (कौटिल्य का अर्थशास्त्र (नीतिशास्त्र) संसार में सुप्रसिद्ध है)।

सभी लोग जगत् के विधान में निपुण हों, विश्वार्थनिर्देशक हों, सभी सभी के सर्मथन के लिए किसी अनिर्वचनीय तेज को अपने में धारण करें, सभी चांरों ओर से सभी के निदर्शन को (आदर्श को) परस्पर स्नेह-भावनाभावित होकर प्रदर्शित करें। छात्र, छात्र की भावना से, गुरुजन गुरुत्व की भावना से युक्त होकर शास्त्रों की सदैव रक्षा करें (अनुशीलन, परिशीलन करें)।।९६।।

**सद्यो भारतमातुरत्र जगतीयं भारतीयश्रिया**
**शान्तिक्षान्तिसुखानुकूलविकसत्क्रान्तिप्रिया राजताम्।**
**नद्यः साधु वहन्तु तेऽपि गिरयो भूमीमिमां बिभ्रतु**
**नन्दानन्तशिरःस्थितश्च सुचिरं राष्ट्रध्वजो भ्राजताम् ।।९७।।**

तत्काल भारतमाता की यह धरती भारतीय शोभा से युक्त हो तथा शान्ति, क्षान्ति एवं सुखों के अनुरूप सुशोभित क्रान्ति की प्रणयिनी होकर विराजमान हो। नदियाँ सुखपूर्वक बहती रहें, सभी पर्वत इस धरती को धारण करें और हिमालय की नन्दा चोटी के अनन्त मस्तक पर चिरकाल तक राष्ट्रध्वज फहराता रहे।।९७।।

**प्राच्यामुद्गतभानुमानपरतः शान्तः प्रतीच्यां शशी**
**दृष्ट्वैकैकमुदेति चास्तमयते दृश्यप्रभोऽस्तप्रभः[१]।**
**दृष्टान्तं भुवि भारतेऽत्र मनुजः स्वस्मिंश्चरित्रे क्रियाद्**
**येनैकेन परस्य हानिरनिशं न स्यादिति प्रार्थये ।।९८।।**

एक ओर पूर्व दिशा में उगते हुए सूर्य, दूसरी ओर पश्चिम दिशा में चन्द्रमा शान्तभाव से क्रमशः दृश्य कान्ति और अस्त कान्ति वाले, परस्पर देखकर उदय और अस्त होते हैं। इस भारत भूमि में मनुष्य अपने चरित्र में ऐसा दृष्टान्त उपस्थित करें जिससे एक के द्वारा दूसरे की सदा ही हानि न हो, यह प्रार्थना करता हूँ।।९८।।

---

१. चन्द्रमाः सूर्यप्रकाशेनैव प्रकाशते तस्मिन्नुदिते चास्तमयते एकैकमवलोक्य न तु विरोध्येति भावः। अयमेवोपकार्योपकारकभावो जीवनेऽपेक्ष्यते (चन्द्रमा सूर्य के प्रकाश से ही प्रकाशित होता है और उदित होने पर परस्पर देखकर अस्त हो जाता है, दोनों में कोई विरोध नहीं है। यही परस्पर उपकार्योपकारक भाव जीवन में अपेक्षित है)।

**कालश्चायुषि नात्मनि प्रभवतान्नाशो मले नामले**
**वासोऽयं निलये निजे भवतु नान्यस्मिन् बलात्स्वीकृते।**
**दासो राष्ट्रमहात्मनोऽस्तु भरतप्रायो नरो नात्मनः**
**सर्वस्सर्वसुखे सुखी परगते दुःखे च दुःखी भवेत् ।।९९।।**

काल आयुष्य में हो, आत्मा में नहीं; नाश मल में हो, अमल में नहीं; निवास अपने भवन में हो, बलपूर्वक अधिकृत किए गये दूसरे के भवन में नहीं; मनुष्य भरत की तरह महात्मा राष्ट्र-पुरुष का दास हो, अपना (अपनी इन्द्रियों का) नहीं; सभी, सभी के सुख में सुखी हों और दूसरों के दुःख में दुःखी हों (अर्थात् परस्पर सहानुभूति की भावना से युक्त हों)।।९९।।

**धर्मो राष्ट्रियको जयत्वनुदिनं धर्मेतरन्नश्यतु**
**कल्याणं जगतोऽस्तु सन्तु परितः सद्भावनाः प्राणिषु।**
**गावः सन्तु च कामधेनुतुलिताः सम्मानिताः पूजिता**
**आद्योच्चारितमन्त्रवद् गुरुगिरां ध्वानः समुज्जृम्भताम् ।।१००।।**

प्रतिदिन राष्ट्रिय धर्म की जय हो और अधर्म का नाश हो। जगत् का कल्याण हो और सर्वत्र सभी प्राणियों में सद्भावना हो। गायें, कामधेनु की तरह सम्मानित और पूजित हों तथा गुरुओं की वाणी की ध्वनि आदि उच्चारित मन्त्र की तरह समुज्जृम्भित हो।।१००।।

।।याचना।।

**श्यामे ! सुभाषिणि ! हिमालयजेऽनघे हे !**
**पञ्चाननासननिवासिनि! चारुशीले !**
**भक्तार्तिहारिणि ! सिताम्बरधारिणि ! त्वं**
**तद्देहि यत्तव सुतोऽहमथानुयाचे ।।१०१।।**

हे श्यामे! सुभाषिणि! हिमालयपुत्रि! निष्पापे! सिंहवाहिनि! सुन्दरशीलशालिनि ! भक्तपीडाहारिणि ! श्वेतवस्त्रधारिणि ! जननि! तुम मुझे वही प्रदान करो, जो तुम्हारा पुत्र यह मैं माँग रहा हूँ।।१०१।।

याचे शिवे ! न गजवाजिनरेन्द्रराज्यं
प्राज्यं धनं न खलु तत्पुरुषार्थलभ्यम्।
विद्याविलासिनि ! दयां यदि मे हि दद्याः
लप्स्येऽहमाशु जननि ! स्वयमत्र सर्वम्।।१०२।।

हे शिवे! मैं हाथी, घोड़ा या राजाओं का राज्य नहीं माँगता पुरुषार्थलभ्य प्रचुर धन भी नहीं चाहता। हे विद्याविलासिनि! यदि मुझ पर दया करती हो तो हे मातः! अपने आप इस जगत् में मैं सभी कुछ पा जाऊँगा।।१०२।।

पुत्रा भवेयुरघराशिखलीकृताश्चेन्
मातस्तथापि न हि ते समुपेक्षणीयाः।
न त्वं दयामयि ! ददासि दयां तु मे किं
निन्दा तवैव भुवनेऽपि भविष्यतीति ।।१०३।।

हे मातः! यदि तुम्हारे पुत्र पापराशि से दुष्ट बनाये गये हैं तो भी तुम्हारी उपेक्षा के पात्र नहीं हैं। हे दयामयि ! यदि तुम दया नहीं प्रदान करती हो तो मेरा क्या बिगड़ेगा? इस भुवन में तुम्हारी ही निन्दा होगी।।१०३।।

अस्मात्परा न किल कापि कृपामयीहा
स्वान्तःस्थले वससि वेत्सि मनोविकल्पम्।
आकर्ण्य वर्णविकलार्भकवाक्प्रणालीं
तत् त्वं कलेवरवरे ! कुरु रोचते यत् ।।१०४।।

हे कृपामयि! इससे अधिक मेरी कोई कामना नहीं। तुम तो अन्तःकरण में रहने वाली हो और मानसिक सङ्कल्प विकल्प को समझती हो, अतः शिशु की टूटी-फूटी वाणी को सुनकर हे श्रेष्ठ शरीरवाली तुम्हें जो रुचे, वह करो।।१०४।।

**जननि ! तव जनोऽयं साम्प्रतं सीदतीत्थं**
**वितर तरलिताक्षि! त्वं सदाऽस्मै दयाम्बु।**
**शशिशकलकिरीटे ! शुम्भमुख्यासुरघ्नि !**
**कलय विकलमेनं पुत्रमाशु प्रसीद।।१०५।।**

हे जननि! इस समय तुम्हारा यह पुत्र इस तरह खिन्न हो रहा है अतः हे चञ्चलाक्षि! तुम इस पुत्र को दयाजल पिलाओ। हे चन्द्रखण्ड-मुकुटे! शुम्भादिराक्षसविनाशिनि! इस विकल पुत्र को सम्हालो, शीघ्र प्रसन्न हो जाओ।।।१०५।।

**तुहिनगिरिसुकन्ये ! ते सुकञ्जायमान-**
**पदयुगमकरन्दास्वादमास्वादमानः ।**
**प्रमुदितमनसं स्वं पुत्रकं मां द्विरेफं**
**सपदि शरणदे! हे चण्डिके! रक्ष रक्ष ।।१०६।।**

हे नगराजपुत्रि! तुम्हारे कमलवत् चरणयुगल के मकरन्द के आस्वाद का आस्वादन करने वाला, (अतः) प्रमुदितचित्त अपने भ्रमरभूत पुत्र की हे शरणदायिनि ! चण्डिके रक्षा करो, रक्षा करो।।१०६।।

**सुरमुनिगुरुविप्रास्त्वां सदा संस्मरन्ति**
**विधिहतमनुजास्ते केचिदन्ये हसन्ति।**
**परमिह जननि ! त्वं स्वात्मकर्मानुरूपं**
**भुवि निखिलजनेभ्यः सत्फलं देहि मातः।।१०७।।**

देव–मुनि–गुरु–विप्र आदि सदा तुम्हारा स्मरण करते हैं तथा भाग्यहीन कुछ अन्य मनुष्य उपहास करते हैं। पर हे जननि! तुम इस पृथ्वी पर अपने कर्मानुकूल सभी को यथोचित सत्फल प्रदान करो।।१०७।।

**'श्रीशक्तिशतकम्' शक्तं संसारत्राणकारणम्।**
**सज्जनामृतसर्वस्वं सुहृच्चित्तानुरञ्जकम् ।।१०८।।**

(यह) श्रीशक्तिशतक संसार का त्राण करने में सर्वथा समर्थ, सज्जनों का अमृतसर्वस्व तथा मित्रों के चित्त का अनुरञ्जन करने वाला है।।।१०८।।

**अम्बिके ! त्वं पराशक्तिः सर्वशक्तिसमूहिता।**
**आत्मशक्तिहतप्रायं विश्वं रक्ष महेश्वरि ।।१०९।।**

हे अम्बिके! तुम सर्वशक्तिसम्पन्न पराशक्ति हो, अतः हे महेश्वरि! अपनी ही प्रतिकूल शक्ति से हतप्राय इस विश्व की रक्षा करो।।१०९।।

**।।इति श्रीशक्तिशतकं सम्पूर्णम्।।**

।। ॐ श्रीपरमात्मने नमः।।

# अथानन्दशतकम्

## [ श्रीमदानन्दमयीमातृशतकम् ]

**अशेषभावोन्मिषदुन्नतस्वरं**
**प्रकाशमानात्मविलासभास्वरम्।**
**शिवं सदानन्दमयं तमीश्वरं**
**परात्परं चेतसि चिन्तये चिरम् ।।१।।**

उन्मिषित होते हुए समस्त भावों एवं उन्नत स्वर वाले, प्रकाशमान, आत्मविलास से देदीप्यमान, सदा आनन्दमय, मङ्गलकर्ता परात्पर परमात्मा का मैं निरन्तर चित्त में चिन्तन करता हूँ।।१।।

**यदंशसम्भूतिविभूतिवैभवात्**
**समुद्भवद् विश्वमिदं विभात्यलम्।**
**तदद्भुतं विष्वगुदित्वरं महो**
**महोदयं चिन्मयतत्त्वमाश्रये ।।२।।**

जिस परमात्म तत्त्व के अंशभूतमात्र वैभव से उत्पन्न हुआ यह चराचर जगत् पर्याप्त प्रकाशित हो रहा है, ऐसे अद्भुत आश्चर्यकारी सर्वत्र उदयशील, महान् उन्नतिकारी, तैजस् चिन्मय तत्त्व का मैं आश्रयण करता हूँ।।२।।

**अमन्दमानन्दमयं चिरन्तनं**
**चिदात्मकं रूपमनूपसूपमम्।**
**विधाय सन्धाय च मानवं वपु-**
**र्बभूव नारायण एष नैकदा ।।३।।**

अत्यानन्दमय, चिरन्तन, चिन्मय, उत्तमोत्तम एवं परम आह्लादकारी मानव शरीर को धारण करके यही नारायण भगवान् अनेक वार इस धरती पर उत्पन्न हुए।।३।।

यदा यदाऽवश्यविधेयकर्मणः
समग्रसम्पूर्तिमसावपेक्षते।
यदेक्षते धर्मगतिं प्रतीपगां
तदावताराय स गां समीहते ।।४।।

ये परमात्मा जब–जब अवश्य कर्तव्य कार्यों की पूर्ति की अपेक्षा करते हैं तथा जब संसार की गति को धर्मविरुद्ध देखते हैं तब–तब वे अवतार धारण करके धरती पर अवतीर्ण होते हैं।।४।।

नरेषु नारीषु यथोचितां तनुं
निषेव्य संसेव्य शुभां वसुन्धराम्।
यशोमयं कर्मपरं स विक्रमं
प्रदर्श्य भूयः परधाम गच्छति ।।५।।

ये श्रीमन्नारायण भगवान् यथाभीष्ट नर अथवा नारी शरीर अङ्गीकृत करके और सुन्दर वसुधा का यथेष्ट सेवन करके साथ ही साथ अपने यशस्वी कर्मपरक पराक्रम का प्रदर्शन कर पुनः परम धाम को चले जाते हैं।।५।।

प्रकारमाकारमनेकमादधत्
समादधत्साधुमनोमनोव्यथाम्।
प्रकाशयद् विश्वमथाश्रयद् भुवं
ध्रुवं परब्रह्म तदात्मनोदितम् ।।६।।

नाना प्रकार के आकार-प्रकार को धारण करते हुए, सज्जनों के मन की मानसिक पीड़ा को शान्त करते हुए, विश्व को प्रकाशित करते हुए तथा पृथ्वी पर आश्रय ग्रहण करके वह परब्रह्म ही निश्चित रूप से स्वयं उद्भूत होते हैं।।६।।

प्रभावसद्भावविभावभावनो-
द्भवद् भवाम्भोनिधिपारमुत्तरत्।
परात्मनस्तत्पदमाश्रयत्परं
परार्थमेकं जनुरद्भुतं बभौ ।।७।।

प्रभावपूर्ण सद्भाव और विशिष्टभाव भावना से उद्भूत होता हुआ, भवसागर को उत्तीर्ण करता हुआ, परमात्मा के सच्चिदानन्द पद को आश्रित करता हुआ परोपकार के लिए एक अद्भुत जन्म हुआ।।७।।

**जनन्यसौ तादृशमात्मनो जनु-**
**र्विभूष्य भास्वद्वपुरुल्लसद्विभा।**
**विभासयन्तीव दिशो दशाभव-**
**न्महोत्सवानन्दमयी परात्मभूः ।।८।।**

यह जननी उस प्रकार के अपने जन्म को विभूषित करके, देदीप्यमान शरीर वाली, उल्लासपूर्ण कान्ति वाली, परमात्मा की अंशभूता, दशों दिशाओं को प्रकाशित करती हुई महान् उत्सवानन्दकारिणी आनन्दमयी नाम से विख्यात हुई।।८।।

**विशेषभावोदयपूर्तिपूजिता**
**सुकीर्तिसत्प्रीतिविभूतिभूषिता।**
**सिताम्बरा मूर्तिमतीव वैष्णवी**
**सरस्वती वाऽऽविरभून्नु शाम्भवी ।।९।।**

विशिष्ट भावनाओं की पूर्ति हेतु सुपूजित, सुकीर्ति–सत्प्रीति की विभूति से अलङ्कृत श्वेत वसनधारिणी मूर्तिमती वैष्णवी की तरह यह सरस्वती उत्पन्न हुई है अथवा क्या यह पार्वती हैं? इसमें वारम्वार सन्देह उत्पन्न हो जाता है।।९।।

**त्रयीमयी त्रैदशतेजसोदिता**
**त्रिकालकालीव कलाविलासिनी।**
**त्रिसन्ध्ययोपास्यपराधिदेवतो-**
**चिताऽर्चिता चारुविभा व्यभासत ।।१०।।**

त्रिगुणात्मिका, देवताओं के तेज से उद्भूत, कलाविलासिनी त्रिकाल काली की भाँति, तीनों सन्ध्याओं में उपासना के योग्य परमाधिष्ठात्री देवी के रूप में अर्चित सुन्दर कान्ति वाली सुशोभित हुई।।१०।।

परामम्बिकां लोकमुपागतामिमा-
ममन्यत प्रज्ञजनः समादरात्।
तदीयसज्जीवनवृत्तकीर्तनं
प्रतिक्षणं कर्तुमना मनोरमम् ।।११।।

प्रतिक्षण उनके सज्जीवनवृत्त का मनोरम कीर्तन करनें में अनुरक्त विज्ञजनों ने इन्हें लोक में अवतीर्ण पराम्बिका रूप में सादर स्वीकार किया।।११।।

यतो यतो दैवतभूतिभासिता
पदं दधौ दिव्यकलाधरद्युतिः।
ततस्ततोऽसौ परमात्मभावनो-
दयत्प्रकाशच्छविमन्वभावयत् ।।१२।।

चन्द्रमा के तेज से आलोकित, देवांश भासित इन्होंने जहाँ–जहाँ अपने चरण रक्खे, वहाँ–वहाँ सज्जनों को उदित होती हुई परमात्म भावना की प्रकाशपरिपूर्ण छवि का अनुभव कराया।।१२।।

जगन्नमन्मूर्धनि भारतावनिः
परात्मनो भूरिमहात्मनां खनिः।
जनिं निजामत्र पवित्रपुण्यभू-
भुवि स्वयं लब्धुममी समुत्सुकाः।।१३।।

विश्व के नम्रीभूत मस्तक पर स्थित यह भारत वसुधा परमात्म-योगी ऐश्वर्यशाली महात्माओं की खान है। महात्मागण स्वयं इस पवित्र भारत की धरती पर जन्म लेने के लिए सदा अभिलाषी रहते हैं।।१३।।

पुरावतारैर्विविधैरनुत्तमैः
सुकीर्तितैः सच्चरिताश्रिताद्भुतैः।
विभूषयाञ्चक्रुरिमां महामहीं
सरामकृष्णा विबुधा अनेकधा ।।१४।।

इसके पूर्व यशस्वी, सच्चरित्र,अद्भुत, विविध उत्तमोत्तम अवतारों से इस महिमाशाली भारत-भू को अनेक वार राम-कृष्ण सहित देवताओं ने विभूषित किया।।१४।।

**यथैव देवा मनुजन्मनोन्मुखा-**
**स्तथैव देव्योऽपि कदाचनोदिताः।**
**अवातरन् भारतराष्ट्रभूतले**
**विधातुकामा जगतीं प्रसेदुषीम् ।।१५।।**

इस भारत राष्ट्र की भूमि पर जिस प्रकार देवगणों ने मनुष्य जन्म लेने के लिए उन्मुख होकर जन्म ग्रहण किया, उसी प्रकार देवियाँ भी कभी–कभी जगती को प्रसन्न रखने के लिये अवतरित हुईं।।१५।।

**महीं महोल्लासविलासलीलया**
**महीयसीं कर्तुमिवात्मनः कलाम्।**
**अनाविलामादधतीह बालिका**
**पराम्बिकाऽऽनन्दमयीयमुद्बभौ ।।१६।।**

महान् उल्लासंपूर्ण विलास लीला से अपनी कलाओं का विस्तार करने के लिये ऐश्वर्यशालिनी भारतधरित्री को स्वच्छ बनाती हुई बालिका रूप में पराम्बिका ने आनन्दमयी के रूप में अवतार ग्रहण किया।।१६।।

**सुविश्रुता पूर्वदिगन्तवङ्गभू-**
**र्महौजसां कीर्तिमतां सतां मता।**
**निजाख्यया जानपदं पदं दधद्**
**विराजतेऽत्र त्रिपुरेति पत्तनम् ।।१७।।**

सुप्रसिद्ध पूर्वदिशा में वर्तमान बङ्गाल प्रदेश महान् ओजस्वी, कीर्तिमान् सज्जनों की धरती मानी जाती है। यहीं अपनी ख्याति के अनुरूप जनपद के पदको वहन करने वाला 'त्रिपुरा' नामक नगर शोभायमान है।।१७।।

इहाग्रहारे श्रुत'खेउड़ा'-ह्वये
स्वमातृसत्पैतृकपालिते गृहे।
अनन्यसामान्यतया सुकन्यका
श्रियाऽपि साक्षात् त्रिपुराऽऽविराबभौ ।।१८।।

यहीं सुप्रसिद्ध 'खेउड़ा' नामक ग्राम में अपने पैतृक आवास में असाधारण कोटि वाली सुन्दर कन्या शोभा में साक्षात् भगवती त्रिपुरा ने जन्म लिया।।१८।।

यथोचितं निर्मलसुन्दरीत्यति-
प्रियं तदाह्वानमभूज्जनुःकृतम्।
ननन्दतुस्तत्पितरौ महोत्सव-
प्रसादितान्तःकरणौ तनूजया ।।१९।।

यथोचित 'निर्मलसुन्दरी' यह अतिप्रिय नाम जन्म होने पर रक्खा गया। विलक्षण रूपाकृतिमती ऐसी बालिका के पुत्री रूप में प्राप्त होने से इनके माता पिता महान् उत्सव से प्रसन्न अन्तःकरण वाले होते हुए अत्यन्त आनन्दित हुए।।१९।।

स हि विपिनविहारी मोक्षदा सुन्दरी सा
जनकसुजननीतिप्रीतिमूर्ती व्यभाताम्।
यदतिशयसुकर्मोदीतपुण्यप्रसूताऽ-
जनि जनितविभावा दिव्यभूतिः सुतेयम् ।।२०।।

पिता विपिनविहारी एवं माता मोक्षदा सुन्दरी अन्योन्य प्रीतिमूर्ति होकर सुशोभित होने लगे, जिनके अत्यन्त पुण्यकर्मों के उदित होने से ऐसी दिव्य ऐश्वर्यशालिनी सुता का जन्म हुआ।।२०।।

द्विजकुलमथ भट्टाचार्यचर्यानुरूपं
श्रुतमनुपममेतद् वङ्गभूमिष्ठमुच्चैः।
धृतजनिजननीयं यत्र कन्याशिशुत्व-
प्रसृमरवरलीलाकौतुकं संवितेने ।।२१।।

श्रेष्ठ आचार्यों की चर्या के अनुकूल वङ्गभूमि में स्थित यह भट्टाचार्य ब्राह्मण वंश अत्यन्त लोकप्रसिद्ध है। जिसमें इस माता ने जन्म लेकर सुन्दर कन्या-शिशुक्रीडा के कौतुक (लीला) का विस्तार किया।।२१।।

**दिवश्च्युता जन्मनिबन्धनोचिता**
**सितद्युतिः शान्तमना मनीषिणी।**
**परन्तपस्तप्तुमिवाधिदेवता**
**दिवं विजेतुं भुवि सा समापतत् ।।२२।।**

ऐसा प्रतीत होता है कि जन्म बन्धन के फलस्वरूप स्वर्ग से च्युत होकर श्वेतकान्ति, शान्तमना, मनीषिणी आनन्दमयी माता स्वर्ग की देवी की भाँति स्वर्ग को जीतने हेतु कठोर तपश्चर्याचरण के निमित्त धरती पर अवतरित हुई हों।।२२।।

**उतात्मसात्कृत्य च मानवीं तनुं**
**स्वयं पराम्बैव परात्मरूपिणी।**
**पुरा जगत्त्राणकृतप्रतिज्ञया**
**धृताकृतिः साऽवततार भूतले ।।२३।।**

अथवा साक्षात् स्वयं पराम्बिका ने ही अपनी पूर्वकृत जगत्त्राण की प्रतिज्ञा के कारण मानव शरीर धारण करके धरती पर अवतार ग्रहण कर लिया है।।२३।।

**सितांशुगौरद्युतिजिन्मुखच्छवि**
**प्रतप्तकार्तस्वरभास्वराकृति।**
**निगीर्णनीलोत्पलकान्ति लोचन-**
**द्वयोन्मिलत्तद्वपुरुल्लसद् बभौ ।।२४।।**

चन्द्रमा की धवल कान्ति को भी जीतने वाली मुखच्छवि वाला, तपाये हुए स्वर्ण के समान चमचमाती हुई आकृति वाला एवं नीलकमलों की कान्ति को तिरस्कृत कर देने वाले लोचनों से उन्मीलित (प्रकाशित) होता हुआ उनका शरीर उल्लसित होने लगा।।२४।।

तदास्यशोणाधररोचिषोन्मिषद्
रदस्मितिद्योतिदयोदयोम्भिता।
हितानुकम्पार्द्रकृपापरम्परा
परोपकाराय ससार सर्वतः ।।२५।।

उनके मुख के रक्तिम अधर की कान्ति से मिश्रित होते हुए दाँतों से युक्त मुस्कराहट से प्रकाशित दया के उदय से परिपूर्ण, मङ्गलकारिणी अनुकम्पा की आर्द्र कृपा-परम्परा लोककल्याण के लिये चारों ओर फैलने लगी।।२५।।

तदुत्तमाङ्गप्रसृतप्रभोल्लस-
ल्ललाटमध्याङ्कितबिन्दुरुच्चकैः।
शरत्समुद्भासिसितांशुवत्परा-
मशिश्रियत्काञ्चन काञ्चनीं कलाम्।।२६।।

उनके शिर पर फैली हुई प्रभा से उल्लसित मस्तक के मध्य में अङ्कित उन्नत बिन्दु ने भासमान शरत्कालिक चन्द्रमा की तरह, किसी परम अद्वितीय स्वर्णमयी कला को धारण किया।।२६।।

असंख्यभक्तप्रणयाद्वयाश्रयं
तदीयदिव्यच्चरणाम्बुजद्वयम्।
निषेव्य निर्मुक्तनरत्वभावना
विभुत्वभूत्या सुधियो विरेजिरे ।।२७।।

असंख्य भक्तगणों के अद्वितीय आश्रय उनके दिव्य दोनों चरण-कमलों का रजःसेवन करके नरत्व भावना से मुक्त होकर सुधीजन सुशोभित होते थे।।२७।।

विशङ्किताकारतया विकारज-
प्रभावतो येऽपि विमूढचेतसः।
व्यलोकयँस्तां युवतीमनिन्दितां
व्यशोधि तेषामपि विक्रियाऽनया ।।२८।।

शङ्कालु प्रवृत्ति होने के कारण विकृतियों के वशीभूत होकर दुष्टप्रकृति वाले जिन लोगों ने भी इस अनिन्द्य युवती को देखा, उन सभी की विकृतियाँ समाप्त हो गईं। इन्होनें उनके चित्त को शुद्ध-बुद्ध कर दिया।।२८।।

**उपेत्य तां मातुलपुत्र एकदा**
**सशङ्कमापृच्छदसौ मनस्विनीम्।**
**वदाशु काऽसि त्वमिहेति साऽवदत्**
**स्वयं परब्रह्म परामवेहि माम् ।।२९।।**

एक वार इनके मामा के पुत्र इनके समीप आये और उन्होंने शङ्कापूर्वक इन मनस्विनी से प्रश्न किया कि शीघ्रता से बताओ तुम कौन हो? इस पर माता ने उत्तर दिया कि तुम मुझे स्वयं साक्षात् परब्रह्म समझो।।२९।।

**यदीच्छसि द्रष्टुमिदं स्थिरीभव**
**स्थिरासनां मामनुसृत्य चेतसा।**
**तथा कृते तेन तयोपदर्शितं**
**स्फुरत्कलं ज्योतिरदर्शि निर्मलम् ।।३०।।**

यदि तुम अपनी इस शङ्का के निराकरण की इच्छा करते हो तो थोड़ी देर तक ध्यानस्थ मुद्रा में स्थित हुई मेरा अनुसरण करके स्थिर हो जाओ। उनके ऐसा करने पर माता के द्वारा निर्मल स्फुरित होती हुई कलाओं वाली भासमान ज्योति का दर्शन कराया गया।।३०।।

**तदा तदासादितदिव्यदृष्टिजं**
**जनुःफलं पूर्णमिवात्मनो मनः।**
**निवेश्य तस्याश्चरणाब्जयोरसौ**
**रसौघमुग्धो मधुपो यथाऽऽबभौ ।।३१।।**

तब माता के द्वारा प्राप्त दिव्य दृष्टि वाला उनका मन जन्म के पूर्ण साफल्य को प्राप्त करने लगा। ये महानुभाव भी माता के चरणकमलों में बैठकर अपार रस की धारा में मुग्ध होते हुए रसलोभी भ्रमर की भाँति सुशोभित होने लगे।।३१।।

सुकृतसञ्चितसत्कृतिभाजनी-
कृतमथात्मपदं नवयौवने।
निदधती परितोऽपि तपोव्रतैः
परमया विभया भुवि दिद्युते ।।३२।।

वे नवयौवन काल में ही पुण्यपुञ्ज से सञ्चित सत्कर्मों से प्राप्त आत्मपद को धारण करती हुई, तपोव्रत से आलोकित, समस्त भूतल पर, अपनी परम प्रभा से प्रकाशित होने लगीं।।३२।।

हृदि निनादिततुर्यपरध्वनि-
श्रवणबोधितकुण्डलिनीस्वरा।
स्वररसा परमात्मदशावशा
चिरमुवास निवासगृहेऽपि सा ।।३३।।

हृदय में निनाद करती हुई तुरही सदृश परम ध्वनि के श्रवण से उद्बुद्ध कुण्डलिनी स्वर वाली, आनन्दपूर्ण परमात्मदशा को प्राप्त यह माता चिर काल तक अपने आवास गृह में निवास करती रही।।३३।।

सङ्गत्य पैतृकपितुर्गृहमत्र विद्या-
कूटेऽग्रहारभुवि भूरितरप्रभावा।
स्वाभाविकीं श्रियमनुक्षणमात्मनीना-
माध्यात्मिकीमतनु सा सुतनुस्ततान ।।३४।।

मनोहराकृति माता ने राज्यप्रदत्त भूमि में अवस्थित अपने पैतृक पिता के गृह विद्याकूट में आकर अपनी प्रभा से लोगों को प्रभावित कर दिया। साथ ही साथ उन्होंने प्रतिक्षण अपनी स्वाभाविक, सूक्ष्म आध्यात्मिक शोभा को विस्तारित करना आरम्भ किया।।३४।।

तत्र स्थितां महिमभासि महीयसीं तां
ज्योतिर्मयः स पुरुषः समुपेत्य कोऽपि।
बालामपूपुजदिमां परमाम्बिकावत्
सत्कृत्य सातिशयभक्त्यनुरक्तचित्तः ।।३५।।

यहीं स्थित रहने पर, एक वार कोई ज्योतिर्मय अद्वितीय पुरुष यहाँ आये। अत्यन्त भक्तिपूर्वक अनुरक्त चित्त वाले इस पुरुष ने महामहिमाशालिनी इस बाला का परम अम्बिका की तरह सादर पूजन किया।।३५।।

**स्वं मातुलालयमुपेत्य च शूलताना-**
**ख्यानश्रुतं पुरमियं निजमातुरङ्के।**
**बाल्येऽपि खेलनपराऽपि विशेषभावान्**
**व्यक्तीचकार हरिकीर्तनकर्णनेन ।।३६।।**

एक वार बाल्यावस्था में ही ये बहुश्रुत 'शूलतानपुर' नामक स्थान पर अवस्थित अपने मामा के घर आईं। यहाँ अपनी माता की गोद में खेलती हुई हरिकीर्तनश्रवणपूर्वक विशिष्ट भावनाओं को व्यक्त किया।।३६।।

**बालाऽप्यलोलतरचित्रविचित्रवृत्तिं**
**सन्धाय शान्तिमतुलां विपुलानुभावात्।**
**सेयं न्यधादनितराकृतिदिव्यकान्तिः**
**प्रीतिप्रकर्षपरिपूर्णमनोमनोज्ञा ।।३७।।**

अत्यन्त प्रीतिपूर्ण मनवाली मनोज्ञ आकृति वाली इस बालिका ने चञ्चल चित्र-विचित्र वृत्ति वाली अतुलनीय शान्ति धारण किया। विशिष्ट भावों के स्फुरण के कारण वह असाधारण स्वरूप एवं दिव्य कान्ति से विभूषित हो गई।।३७।।

**तादृश्यसावभिनवाप्तवयस्यमोघा-**
**निर्वाच्यचारुतरचिन्मयभावनोत्का।**
**दुर्गाकृतिं निदधती स्वयमेव दुर्गा-**
**पूजाविधिं परिजनस्य पुरो व्यधत्त ।।३८।।**

ऐसी इस बाला ने नवीन युवावस्था में ही अमोघ, अवर्णनीय, सुन्दरतर एवं चिन्मय भावों से निरन्तर उत्कण्ठित होती हुई दिव्य भगवती दुर्गा की आकृति को धारण कर परिजनों के समक्ष स्वयं ही दुर्गा-पूजन विधान को बताना प्रारम्भ कर दिया।।३८।।

दृष्ट्वाद्भुतं तदनु कौतुकमेतदीयं
सर्वोऽप्यमन्यत जनन्यवताररूपाम्।
तामागतामवनिमत्र परां पराम्बां
कन्यानुरूपकृतरूपविभासमानाम् ।।३९।।

सभी उपस्थित जनों ने ऐसे आश्चर्यकारी अद्भुत रूप को देखकर इन्हें जननी दुर्गा का अवतार माना। ऐसा प्रतीत होता था मानो इस धरती पर पराम्बिका ने विलसित कन्या रूप में दुर्गा का अवतार ग्रहण कर लिया हो।।३९।।

ग्रामान्तसंस्थिततरूपवनं प्रविश्य
संविश्य कुत्रचिदसौ द्रुमपादमूले।
एकैकपादपमवेक्ष्य फलोपपन्नं
सम्बोध्य भाषितवती कृतचारुहासा ।।४०।।

गाँव के किनारे पर स्थित वृक्षों के वन में वृक्षवाटिका में प्रवेश करके उसकी जड़ में एक स्थान पर बैठकर फलों से लदे हुये एक–एक वृक्ष को सूक्ष्म दृष्टि से देखकर मन्द–मन्द हास्यपूर्वक उनसे बात करतीं थीं।।४०।।

भूयोऽपि भूषितरसालदलाग्रवृन्त-
व्यालम्बिकम्रलसदाम्रफलावलीभिः।
आकृष्यमाणमनसा तदुपान्तगाऽसौ
सस्पर्शमार्षवचनैः सुचिरं बभाषे ।।४१।।

सुन्दर–सुन्दर नवीन हरित पत्तों से सजे हुए एवं रसीले रसाल के लटकते गुच्छों वाले वृक्षों से ये वारम्वार आकृष्ट होती रहीं। अनन्तर धीरे से उठकर उनके पास जाकर उन्हें स्पर्शपूर्वक सुन्दर मधुर वचन कहे।।४१।।

प्रातश्च सायमथ सेयमबोधबाला
सम्बोधपूर्वकमिमान् वनवृक्षगुल्मान्।
मौनं मुनीनिव समादधतो विशिष्य
स्वात्मीकृतान् निजनिभान् सुहृदोऽनुमेने ।।४२।।

यह अबोध बालिका प्रातः सायं इन वन-लता-वृक्ष गुल्मों को सम्बोधित करती थीं। मुनियों के समान मौन धारण किये हुए उन्हें वह अपने समान आत्मीय सुहृद् (मित्र) मानती थी।।४२।।

**तां द्वादशाब्दवयसि प्रकृतप्रवेशां**
**विज्ञाय विज्ञपितरौ सुविवाहयोग्याम्।**
**ढाकास्थविक्रमपुराधिनिवासितुङ्ग-**
**वङ्गीयविप्रशुभवंशवधूं व्यधाताम् ।।४३।।**

धीरे-धीरे यह बाला बारह वर्ष की हो गई और सुबुद्ध इनके माता-पिता ने इन्हें विवाहयोग्य मानकर, 'ढाका' (बंगलादेश) में स्थित विक्रमपुर निवासी श्रेष्ठ वङ्गीय ब्राह्मण कुल में इनका पाणिग्रहण संस्कार कर दिया।।४३।।

**नाम्ना प्रसिद्धिगमितो 'ज़गबन्धुचक्र-**
**वर्ती' द्विजस्त्रिपुरयाऽनुगतः स्वपत्न्या।**
**पुत्रस्तयोश्च रमणीत्यनुमोहनाख्यो**
**जातः पतिः स सुमतिः सुवधूत्तमायाः ।।४४।।**

'जगबन्धु चक्रवर्ती' इस नाम से सुविख्यात ब्राह्मणश्रेष्ठ अपनी पत्नी 'त्रिपुरा' से अनुगत हुए और रमणी मोहन नामक उनके पुत्र सुमतिसम्पन्न उस सुन्दर उत्तम वधू के पति हुए।।४४।।

**नव्यामनन्यसुषमां सुमनोज्ञबाला-**
**मध्यात्मभूमिपरभूतिमिमां विलोक्य।**
**उत्सृज्य तां प्रति स साम्प्रतिकानुरागं**
**वैराग्यभावपरिनिष्ठमनो निदध्यौ ।।४५।।**

नवीन अद्वितीय सौन्दर्यशालिनी कमनीय कान्ति वाली परम आध्यात्मिक विभूतिभूषित इन्हें देखकर इनके पति ने इनके प्रति साम्प्रतिक भौतिक अनुराग त्याग दिया। रागत्याग के अनन्तर वे वैराग्य भाव से परिपूर्ण मन वाले हो गये।।४५।।

उद्यत्परात्मविभुतोन्मुखमुज्ज्वलात्म-
दाम्पत्यमद्भुतमभूदनयोः सुयूनोः।
यत्रैकतानमनसोरुभयोरुपास्यं
सच्चिद्घनोच्चपरमार्थपदं चकाशे ।।४६।।

उदित होती हुई परमात्मविभुता के कारण उन्मुख उज्ज्वल एवं अद्भुत दाम्पत्य भाव से ये दोनों ओतप्रोत हो गए। इस दाम्पत्य परम्परा में एकतान मन वाले इस युगल के हृदय में उपास्यमान सच्चिदानन्दघन परमात्म तत्त्व प्रकाशित होने लगा।।४६।।

निःसंख्यजन्मकृतपुण्यफलप्रकाशा-
देतादृशः सदृशसुन्दरशिष्टयोगः।
भोगेतरोत्तमचिदात्मनिविष्टचेतो-
वैराग्यभाग्यविमलोदयमादधाति ।।४७।।

असंख्य जन्मकृत पुण्यफल के प्रकाशित होने से ऐसा अनुकूल विलक्षण विशिष्ट योग बनता है और भोगेतर, उत्तम, चिन्मय, आत्मनिविष्ट, चित्त से वैराग्य भाव तथा निर्मल भाग्योदय को धारण करता है।।४७।।

देहार्धसङ्घटनयोल्लसदर्धनारी-
गौरीश्वरोऽप्यनुपमोदितमुक्तभोगम्।
दाम्पत्ययोगमनयोः परिवीक्ष्य नूनं
सोऽक्षित्रयं कृतनिमीलनमाचकाङ्क्ष ।।४८।।

अपनी अर्ध देह की सङ्घटना से सुशोभित अर्ध-नारी गौरी के पति भगवान् शिव जी ने भी अनुपम उद्भूत मुक्त भोगवाले इन दोनों के दाम्पत्य को देखकर निश्चय ही अपने तीनों नेत्रों को बन्द रखने की इच्छा की।।४८।।

ब्रह्माऽपि विष्णुरपि शम्भुरपि त्रिदेवा
हेवाकिनोऽमरगणा मुनयो मनुष्याः।
लोकाश्च निर्गलितगर्वमुदीक्षमाणाः
सब्रह्मचारियुगलं भृशमाशशंसुः ।।४९।।

ब्रह्मा, विष्णु, महेश आदि त्रिदेवों, स्वर्गीय अमरगणों, मुनियों, मनुष्यों सभी ने निरभिमान होकर इस ब्रह्मचारी युगल को निरन्तर निरखते हुए इसकी भूरि–भूरि प्रशंसा की।।४९।।

**सा निर्मला सुरसरित्सरसाऽऽश्रयन्ती**
**तं मोहनं पतिमपां परिपूर्णपूरम्।**
**योगाध्वकूलधृतजीवनसाधनान्त-**
**स्वान्तस्स्थचिद्घनसुखाम्बुनिधिं जगाहे ।।५०।।**

देवनदी भागीरथी गङ्गा के समान निर्मल उस सुन्दरी ने परिपूर्ण जलप्रवाह वाले उस मोहन पति का आश्रयण ग्रहण किया। इस प्रकार उसने योगमार्ग के कूल पर धारित जीवन की साधना के चरम स्वान्त में स्थित चिद्घनानन्दसागर में सानन्द अवगाहन किया।।५०।।

**पत्न्या विचित्रतरचारुचरित्रलीलो-**
**ल्लासानुकृष्टहृदयः पतिमोहनोऽसौ।**
**कालान्तरे समभवत्किल साधुभोला-**
**नाथाभिधो धुतसमस्तजगत्प्रपञ्चः ।।५१।।**

विचित्रतर सुन्दर चरित्रलीला के उल्लास से पत्नी के द्वारा इन पतिदेव 'मोहन' का हृदय आकृष्ट हो गया और कालान्तर में इन्होंने समस्त जागतिक प्रपञ्च को त्यागकर 'भोलानाथ' नाम ग्रहण कर साधुजीवन प्रारम्भ किया।।५१।।

**वैखानसव्रतविकासिचिदेकभान-**
**ब्रह्मप्रकाशितमती शुचिदम्पती तौ।**
**शश्वद्यती सकललोकमलौकिकाभा-**
**वुन्नेतुमुन्नतगती जगतीमभाताम् ।।५२।।**

संन्यास व्रत से विकसित चित्त में परब्रह्म के परम प्रकाश से प्रकाशित मति वाले, शश्वद् यती, अलौकिक आभावाले एवं उन्नत गति वाले वे दोनों पवित्र दम्पति समस्त लोक का उद्धार करने के लिये धरती पर सुशोभित होने लगे।।५२।।

**विष्वग्विभोन्मिषदमन्दरुचिस्मितास्या**
**सानन्दभूमिपरिभावितभूतिभावा।**
**सद्भावभूषितसुहृत्तमगीतकीर्तिः**
**कारुण्यमूर्तिजननीव निजाऽजनिष्ट ।।५३।।**

इस माता ने स्वयं को करुणा की मूर्ति के रूप में उत्पन्न किया। फैलती हुई सर्वत्र व्यापक प्रभा की निरन्तरता से कान्तिपूर्ण किञ्चिद् हास्यमय मुख वाली, आनन्द की भूमि पर भावित विविध ऐश्वर्ययुक्त भाव वाली एवं सद्भाव से अलङ्कृत अतिशय मैत्रीपूर्ण रूप से जिसकी कीर्ति का गुणगान हो रहा है, ऐसी माता विशिष्ट अलौकिक गुणों से सम्पन्न थी।।५३।।

**वैशाखमासि मधुमाधवसन्धिभासि**
**प्राकाशि यद् विशददिव्यरुचा तयाऽत्र।**
**तत्सत्तिथौ शुभमुहूर्तमितोर्ध्वकाले**
**कालीश्वरीयमुदपद्यत सेह सेव ।।५४।।**

वसन्त एवं ग्रीष्म की सन्धि से कान्तिमान् वैशाखमास में इनके द्वारा जो विशद दिव्य प्रभा से अपना स्वरूप प्रकाशित किया गया वह शुभमुहूर्तयुक्त काल में, सुन्दर तिथि में ऐसा प्रतीत होता था कि भगवती काली स्वयं उत्पन्न हुई हैं।।५४।।

**आहोस्विदस्य जगतोऽतनु दीनहीनान्**
**जीवानशेषकलुषान् कलिकीलिताङ्गान्।**
**उद्धर्तुमुत्कटनिजप्रबलेच्छयाऽत्र**
**विष्णुप्रसूतजनिराजनि वैष्णवीव ।।५५।।**

अथवा संसार के समस्त पापपङ्किल कलिकाल प्रभावग्रस्त दीन-हीन जीवों को अपनी प्रबल उत्कट इच्छा से उद्धृत करने हेतु धरती पर मानो श्री विष्णु जी के अंश से उद्भूत महालक्ष्मी ने जन्म लिया हो।।५५।।

**अज्ञानघोरतिमिरान्धितलोचनाना-**
**मन्योन्यवादपरिवादविवादितानाम्।**
**संसुप्तवृत्तिपतितात्मरिपूकृतानां**
**ब्राह्मीव साऽऽविरभवद् भुवि जागराय ।।५६।।**

ऐसा प्रतीत होता है कि मानो अज्ञान के गहन अन्धकार से अन्धे लोचनों वाले, परस्पर कलहग्रस्त एवं सुप्त-सत्त्व वृत्ति के कारण शत्रुवत् आचरण करने वाले, सारे दुर्जनों को जगाने के लिए वह स्वयं ब्रह्मा जी के अंश से उत्पन्न होने वाली ब्रह्माणी (सरस्वती जी) ने ही अवतार ग्रहण किया हो।।५६।।

**माङ्गल्यशीलशुचिशान्तिकलाकलापाऽ-**
**पाकर्तुमत्र भुवनोद्गतपापपुञ्जम्।**
**पुण्यप्रकर्षमनिशं पुनरुन्निनीषुः**
**साऽभूत्समस्तसुरसन्धितशक्तिरेका ।।५७।।**

कल्याणमय स्वभाव एवं पवित्र शान्तिमय कला समूह वाली वह देवी मानो इस संसार में सांसारिक पापराशि को दूर कर देने के लिये और निरन्तर पुनः पुण्य की पराकाष्ठा का उन्नयन करने की इच्छा से समग्र देवों की पुञ्जीभूत सामूहिक शक्ति के रूप में अद्वितीय स्वरूप वाली उत्पन्न हुई हो।।५७।।

**मानोन्नतान् सुरसमान् मनुजान् विधातुं**
**सन्धातुमुच्चचरितोचितचारुवृत्तान् ।**
**किं वा मनोरममनोःकुलभूरिभूषा**
**सा मानवी भुवि बभौ तपसः प्रसूतिः ।।५८।।**

अथवा देवतुल्य मनुष्यों को मान एवं उन्नति देने हेतु तथा उच्च चरित्र एवं उचित सुन्दर शील एवं आचरण से पूर्ण कर देने के लिये,मनोरम मनु के कुल की कान्ति की पराकाष्ठा, तपश्चर्या की प्रसूति यह देवी धरती पर मानवी आकृति में उत्पन्न हुई है।।५८।।

पित्रालयादुपगता श्वसुरालयं सा
सामोदमात्मनि परात्मविभां वहन्ती।
भावाभिवेशवशमुन्मिषदन्तरुद्य-
च्चिद्बोधनिर्वृतिपदं न पलं जहार ।।५९।।

पिता के घर से श्वसुर के घर आने पर भी पूर्ण प्रसन्नचित्त परमात्मा की विभा से विभूषित होती हुई, भावों के आवेश मात्र से उन्मिषित होती हुई आन्तर चिद्बोध की परमानन्दमय स्थिति को एक पल के लिये भी नहीं त्यागा।।५९।।

लीलावलीस्तदुचिताः परिदर्शयन्ती-
मुन्मुक्तहास्यलसदास्यविशेषलक्ष्मीम्।
लक्ष्मोपलक्षितविलक्षणभाववृत्तिं
सम्मेनिरे सुमतयः परदेवतां ताम् ।।६०।।

विभिन्न प्रकार की मनोहर लीलाओं को प्रदर्शित करने वाली, उन्मुक्त हास्य से सुशोभित मुखशोभा वाली, चिह्नों से लक्षित विलक्षण भावभङ्गिमाओं वाली उस बाला को विद्वानों ने परम देवता के रूप में माना।।६०।।

मातेति विश्रुतिमुपैष्यति भूतलेऽस्मिन्
सौभाग्यभूमिरियमत्र च नः समेषाम्।
विद्वज्जनोऽथ बहुजन्मफलोदयेन
पुण्येन दृष्टिपथमाप्तवतीत्यबोधि ।।६१।।

इस जगती में ये 'माता' इस नाम से ख्याति प्राप्त करेंगी और ये हम सभी लोगों की सौभाग्य–भूमि हैं, ऐसा सभी लोगों का मानना था । इसी प्रकार विद्वान् गण यह मानते थे कि ये हम सभी के अनेक जन्मों के सुकृत फल के कारण हमारी दृष्टि में आई हैं।।६१।।

सङ्कीर्तनश्रवणजातपरानुभूत्या
प्रीत्याऽनुभावजनितां परमामवस्थाम्।
तस्याः प्रकृष्टपरिदीप्तियुतां विलोक्य
लोकोऽप्यलौकिकमुदं क्षणमाससाद।।६२।।

सङ्कीर्तन, श्रवण एवं परमात्मानुभूति के कारण, प्रीति से विशिष्ट भावोत्पन्न तथा सर्वतः व्याप्त हो जाने वाली अत्यन्त दीप्तिमती उसकी परम अवस्था को देखकर लोगों ने क्षण भर के लिये अलौकिक, दिव्य मोद को प्राप्त किया।।६२।।

**श्रीकृष्णदिव्यचरितावलिबाललीलाः**
**संश्रुत्य शैशवमिव स्वयमभ्युपेत्य।**
**उन्मुक्तचापलमसौ स्वगतस्वभावं**
**सानन्दमाधित विवर्धितकौतुकेन ।।६३।।**

भगवान् श्रीकृष्ण की अलौकिक बालक्रीडाओं को सुन-सुन कर, स्वयं मानो उस शैशवावस्था को प्राप्त करके, उन्मुक्त चाञ्चल्यपूर्वक, बढ़े हुए कौतुक के कारण इन्होंने सानन्द उस विलक्षण स्वात्म-स्वभाव को धारण कर लिया।।६३।।

**नामानुकीर्तनसमक्षणवीक्षमाणं**
**व्योम स्फुरच्छशि सतारकमक्षिलक्ष्यम्।**
**स्वात्मीभवत्तदनुरूपचमत्कृतिं साऽ-**
**प्यातन्वती विशदभासमिवोच्चकाशे ।।६४।।**

भगवन्नाम स्मरण क्षण में दिखलाई पड़ने वाले आकाश को स्फुरित नक्षत्रयुक्त चन्द्रमण्डित अभिलक्षित करके, आत्मसात् करते हुए उसके रूप एवं तदनुरूप चमत्कार को फैलाती हुई ये विशिष्ट तेज की तरह प्रकाशित हुईं।।६४।।

**बालार्कविम्बविकसन्नवरश्मिमाला-**
**मालोकयन्त्यमलमुत्पललोचना सा।**
**सामोदमुल्लसदमन्दविकासभासा**
**रेजेतरां स्थलजदिव्यसरोजिनीव ।।६५।।**

उदयकालिक रक्ताभबिम्ब सूर्य की विकासमान नवीन किरणमालाओं को देखती हुई वह कमलनयनी, मोदपूर्वक उल्लसित होती हुई निरन्तर विकसित कान्ति के कारण स्थलोत्पन्न दिव्य सरोजिनी की तरह सुशोभित हुई।।६५।।

**सायं कदाचिदुपगत्य वनान्तभूमिं**
**भूपृष्ठपांसुभरविष्टरसन्निविष्टा।**
**स्वच्छोच्छलच्छविसपुष्पसपत्रशाखाँ-**
**स्तान् शाखिनश्चिरसखानिव साऽभ्यनन्दत् ।।६६।।**

सायङ्काल में किसी समय वनान्त भूमि में पहुँचकर, धूल से भरी हुई धरती के आसन पर निःशङ्क बैठी हुई, निर्मल फैलती हुई छवि वाले पत्र-पुष्प से लदे हुए उन वृक्षों को चिरकाल तक मित्र की तरह उन्होंने अभिनन्दित किया।।६६।।

**स्मेराञ्चितास्यसुषमाश्रितविश्रुतश्रीः**
**श्रीमातृमूर्तिरियमात्मकलावितानैः।**
**सर्वत्र साऽभिशुशुभे स्थिरभावपूर्णाऽ-**
**पर्णेव मौनिमुनिवृत्तिपरा पराम्बा ।।६७।।**

मुस्कराते मुख की सुन्दरता से विश्रुत शोभा वाली श्री माता की यह मूर्ति अपनी कलाओं के विस्तार से, मौनी मुनि के सदृश आचरण में संलग्न, स्थिरभावपूर्ण पराम्बिका अपर्णा की भाँति सुशोभित हुई।।६७।।

**एतादृशाद्भुतविशेषदशावशां तां**
**संवीक्ष्य तत्पतिवरोऽप्यतिचिन्तितोऽभूत् ।**
**प्रज्ञाविशिष्टविबुधैः परिबोधितोऽन्ते**
**योगीश्वरीति मतिमात्मनि निश्चिकाय ।।६८।।**

इस देवी की ऐसी आश्चर्यजनक विचित्र अवस्था को देखकर इनके पतिमहोदय अत्यन्त चिन्तित हो गये। तब विशिष्ट प्रज्ञासम्पन्न विद्वज्जनों के द्वारा समझाए जाने पर 'ये योगीश्वरी हैं' ऐसा मन में निश्चित किया।।६८।।

**विज्ञाय बोधितधियोदिततत्त्वदृष्टिः**
**जायामिमां स गिरिजामिव मन्यमानः।**
**तामन्वगच्छदनिशं गुरुनिष्ठयाऽन्त-**
**र्बद्धादरो नतशिरोधृतपाणियुग्मः ।।६९।।**

इस प्रकार ऐसा जानकर सुबुद्ध बुद्धि से उदित तात्त्विक दृष्टि वाले इनके पति ने अपनी इस पत्नी को गिरिजा (पार्वती) की तरह मानते हुए निरन्तर श्रीमाता के प्रति गुरुनिष्ठाभाव से सादर हाथ जोड़कर अत्यन्‍ विनयपूर्वक सम्मान प्रदर्शित करने लगे।।६९।।

**पत्या समं समनिवासमथाचरन्ती**
**कार्यप्रयोजनवशात्तमनुव्रजन्ती।**
**लोकोत्तरां परमसौ स्थिरयोगवृत्तिं**
**स्वीकृत्य साधनचतुष्टयमाललम्बे ।।७०।।**

पति के साथ–साथ एकत्र निवास करती हुई और कार्य के प्रयोजन-वशात् उनका अनुगमन करती हुई माता ने अलौकिक स्थिर योगवृत्ति को स्वीकार करके साधन चतुष्टय (नित्यानित्य वस्तुविवेक, ऐहलौकिक तथा पारलौकिक फलों के भोग से विराग, शम–दम उपरति तितिक्षा समाधान सम्पत्ति एवं मोक्षेच्छा) का आलम्बन किया।।७०।।

**द्वाविंशके वयसि वाजिपुराग्रहारे**
**श्रीकालिकार्चनमहोत्सवकालिकाह्ना।**
**अह्नाय भावितहृदोद्गतसत्प्रकाशा**
**सा पङ्कजासनगता सुचिराय तस्थौ ।।७१।।**

बाइस वर्ष की आयु में बाजीपुर के अग्रहार (गाँव) में श्रीमहाकाली के पूजनमहोत्सव काल में वह एकाएक, भावित मन से उद्गत सच्चित् प्रकाशवाली, पद्मासन स्थिति में लम्बे समय तक बैठी रहीं।।७१।।

**तस्यां स्थितौ समवलोक्य च तां जनौघः**
**कालीं परां श्रितधरामिव सन्निपत्य।**
**पुष्पाक्षताम्बुतिलकार्चितपादपद्मां**
**देवीमपूपुजदिमां प्रणिपातपूर्वम् ।।७२।।**

पद्मासन लगाए हुए उनको देखकर जनसमुदाय ने धरती पर आई हुई साक्षात् महाकाली की भाँति मानते हुए समीप पहुँचकर इस देवी की जल–फूल–अक्षत–तिलक से विधिवत् पूजा करके वारम्वार प्रणाम किया।।७२।।

अधिधरणि पदाब्जद्वन्द्वमानन्दमातु-
हृदि निदधदनेको लौकिको भक्तवर्गः।
जनितजनिफलाप्तस्वात्मपुण्यप्रकाशा-
दभजदभयभावाज्जन्मनां पापमुक्तिम् ।।७३।।

इस धरती पर श्री माता के चरणकमलयुगलों को अपने हृदय में धारण करता हुआ भक्त-समाज आनन्दित होता था तथा जनसमूह ने उत्पन्न जन्मफल से प्राप्त अपने पुण्य के प्रकाशित होने से जन्म–जन्मान्तर के पापों की मुक्ति हेतु निर्भय-भावपूर्वक मातृचरणों का सेवन किया।।७३।।

स्वयमियमपि माता ज्योतिराध्यात्मिकं तत्
स्वमनसि परिपूते पूर्णमातन्वतीव।
दिशि दिशि भुवि यावज्जीवनं पर्यटन्ती
पतितजनसमूहान् सा समुद्धर्तुमैच्छत् ।।७४।।

यह माता भी स्वयं अपने पवित्र मन में उस आध्यात्मिक ज्योति को विस्तीर्ण करते हुए, धरती पर सर्वत्र आजीवन हर दिशा में पर्यटन करते हुए पतित जनों का उद्धार किया करती थीं।।७४।।

जगति च निखिलेऽस्मिन् जातुचिज्जायमान-
स्तदतिशयमहिम्नः साम्यमापत् स कोऽपि।
कृतपदवरिवस्याः येऽपि तस्याः कृपायाः
कणमपि समवापुस्तेऽतिधन्या बभूवुः ।।७५।।

समस्त इस धरती पर कदाचित् किसी ने श्री माता की उत्पन्न होती हुई अतिशय महिमा के साम्य को प्राप्त किया हो। जो लोग उनके चरणों की पूजा में निरत थे, जिन्होंने उनकी कृपा का कण मात्र भी पा लिया, वे सभी धन्य हो गये।।७५।।

चकितचकितनेत्रस्फारमुच्चैरुदीक्ष्य
तदुदितगुरुसिद्धिं साधनाध्वाध्वनीनाः।
नियमितयतयो वा प्राप्तदीक्षा जनन्या-
श्चरणशरणमीयुस्तत्प्रभावानुकृष्टाः ।।७६।।

साधनापथ पर चलने वाले साधक जन अथवा नित्य योग साधकों ने श्री माता से दीक्षित होकर, आँखें फाड़–फाड़ कर साश्चर्य श्री मातृकृपा से प्राप्त श्रेष्ठ सिद्धियों को देखकर, उनके प्रभाव से आकृष्ट होते हुए उनके चरणशरण को प्राप्त कर लिया।।७६।।

**समुदितसुखसारस्नेहकारुण्यपूर्ण-**
**प्रतिकृतिरिव शान्तानन्तकान्तिप्रदीप्ता।**
**प्रकृतिपरविभूतिर्ब्रह्मभूतिप्रतिष्ठा-**
**परिणतपरिपूर्तिः स्त्र्याकृतिः साऽऽविरासीत् ।।७७।।**

उत्पन्न सुख के तत्त्वभूत स्नेह की करुणा से पूर्ण छाया की भाँति, शान्त अनन्त कान्तियों से देदीप्यमान, प्रकृति की परम विभूति एवं ब्रह्म के ऐश्वर्य की प्रतिष्ठा पूर्णकाम के परिणाम वाली यह कोई अद्वितीय स्त्री की आकृति उत्पन्न हुई।।७७।।

**अकलितजनुराप्तध्यानमष्टाङ्गयोगं**
**परिकलितसमाधिं साऽतिकालं दधाना।**
**अनुपलतलदर्शिस्वत्रिकालज्ञदृष्ट्या**
**जनमनसि निगूढां भावनां संविवेद ।।७८।।**

अगणित जन्मों से प्राप्त ध्यान वाले अष्टाङ्गयोग (यम, नियम, आसन, प्राणायाम, प्रत्याहार, ध्यान, धारणा,समाधि) पूर्वक समाधि को लम्बे समय तक धारण करने के कारण, प्रतिपल सूक्ष्मदर्शी अपनी त्रिकाल (वर्तमान, भूत, भविष्य) दृष्टि से उन्होंने लोगों के मन में छिपे हुए भावों को जान लिया।।७८।।

**क्वचिदपि निजभक्तैर्भाव्यमाना तदन्तः-**
**स्फुरितपरमभावाकारमाविर्भवन्ती।**
**अकृत कृतकशङ्कानङ्कमारोप्य माता**
**प्रकृतशिशुसमाँस्तान् निर्भयान् सान्त्वदानैः ।।७९।।**

जब कभी अपने भक्तों के द्वारा उनके अन्तःकरण में श्री माता आध्यात होती थीं तो उनके हृदय में वह परम भावनावश साकाररूप धारण कर लेती थीं। इसके साथ ही उन सभी प्रकृत शिशु सदृश' भक्तों को शङ्काग्रस्त होने पर श्री माता अपने क्रोड में समाहित करके सान्त्वना वचनों से निर्भय कर देती थीं।।७९।।

**प्रतिपलमिह नश्यद् दृश्यजातं न शश्वत्**
**स्थिरगतिरतिरत्र प्राणिनां दुःखहेतुः।**
**इति सुमधुरसाराजस्रनिर्व्याजवाचोऽ-**
**मृतभृत इव धाराः साऽसृजज्जाह्नवीव ।।८०।।**

इस संसार में प्रतिक्षण जड़ चेतन का समस्त दृश्य परिवर्तनशील है। तथा स्थिर गतिवाली रति सारे प्राणियों के दुःख का कारण होती है। यही विचार करके श्री माता ने सुमधुर तत्त्वमयी निरन्तर निश्छल वाणी की अमृतपूर्ण धारा को भागीरथी गङ्गा की भाँति उत्पन्न कर दिया।।८०।।

**सहजसरलबोधोद्बोधनान्मातुरस्याः**
**समभवदधिसंख्यो भक्तवर्गोऽनुगामी।**
**भरतभुवि भवानीभूतिभूषांशभूता**
**तदनुभवभवाब्धिक्लेशमेषाऽऽचकर्ष ।।८१।।**

इस माता के स्वाभाविक सरल–सरलतर बोधपूर्ण उद्बोधनों से अधिसंख्य भक्तसमुदाय इनका अनुगामी हो गया।तथा इन्होंने भारतधरा पर पार्वती के ऐश्वर्यांश से उद्भूत होकर उन भक्तों के अनुभूत भवसागरजन्य कष्टों को दूर कर दिया।।८१।।

**स्वयमिह जगदीशः सत्यमानन्दरूपः**
**स्फुरति हृदि जनेभ्यः सन्ददत्सर्वसौख्यम्।**
**यदि भुवि मनुजानां तद् भवेदेकलक्ष्यं**
**प्रभुपदमनुसेव्यं सा शुभं संदिदेश ।।८२।।**

यदि धरती पर मनुष्यों का एकमात्र लक्ष्य प्रभुचरणों का अनुसेवन ही हो तो स्वयं सत्यस्वरूप; आनन्दविग्रह, श्रीभगवान् जगदीश लोगों को समस्त सुखराशि प्रदान करते हुए उनके हृदय में सदा स्फुरित होते रहते हैं, ऐसा शुभ संदेश माता ने दिया था।।८२।।

**त्यज धनगतमोहं त्यागपूर्वं गृहाण**
**प्रचुरतरमुपात्तं तत्तु नश्यत्यवश्यम्।**
**वितर नर ! समग्रं साग्रहं केवलं तत्**
**परमधनमुपास्यं चिद्घनं साक्षिभास्यम् ।।८३।।**

उन्होंने कहा–हे नरों ! सांसारिक धन सम्पत्ति के प्रति मोह छोड़ दो और त्यागपूर्वक ग्रहण करो, क्योंकि जुटाई गई पर्याप्त भौतिक सम्पत्ति नाशवान् होती है। वस्तुतः परम पूर्ण सच्चिदानन्द मात्र परमात्मा रूप धन ही उपासना एवं सेवन के योग्य होता है, क्योंकि उसकी प्राप्ति से व्यक्ति को कहीं कोई भय नहीं होता।।८३।।

**मनुजनुरुपलभ्यालभ्यलाभोपनीतं**
**मनुज ! ननु यतस्व प्राप्तुमात्मस्वरूपम्।**
**शुभपदमनुसृत्य श्रीमदानन्दकन्द-**
**प्रभुपरमपदाब्जासङ्गभृङ्गायमाणः ।।८४।।**

हे मनुष्यों ! शुभ पद का अनुसरण करते हुए सच्चिदानन्दकन्द भक्तवत्सल श्रीभगवान् के चरणकमलों में आसक्ति करते हुए भ्रमरवत् आचरणपूर्वक मानव जन्म के लिये प्राप्य किन्तु अत्यन्त कठिनाई से सेवनीय आत्मस्वरूप को प्राप्त करने के लिये प्रयत्न करो।।८४।।

**हरिचरणसरोजध्यानसन्धानगान-**
**स्मरणनमनमग्नं मानसं संविधेहि।**
**यजनभजनसङ्गासक्तचित्तानुसषङ्गा-**
**दनुसर नर ! रिङ्गत्स्वान्तरङ्गास्पदं तत् ।।८५।।**

हे मानवों ! परमात्मा के चरणकमलों के ध्यान, चिन्तन, गान स्मरण एवं नमन में अपने मन को मग्न रखो। पूजन, भजन, सत्सङ्ग में संसक्त चित्त के संयोग से अपने अन्तःकरण में निरन्तर विद्यमान उस परमपद का ही अनुसरण करो।।८५।।

**यमनियमनिबद्धं जीवनं सद्व्रतोद्य-**
**त्क्षममिदमनुवीक्ष्य स्वच्छमाचारपूतम्।**
**क्षणमपि भव मग्नस्त्वं तदात्मीकृतात्मो-**
**ल्लसदमितपरात्मोद्भासि चिद्भूमिभासि ।।८६।।**

यह मानव जीवन उत्तम व्रतों के आचरण से उल्लसित योग्यता को प्राप्त करता है तथा यम-नियमादि के पालन से स्वच्छ एवं पवित्र होता है, इसको देखकर तुम क्षण भर के लिये आत्मीकृत उस आत्मा में उल्लसित परमात्मा को उद्भासित करने वाले चिद्भूमि के प्रकाश में निमग्न हो जाओ।।८६।।

**क्वचिदपि निवसन् वा निर्विशन् संविशन् वा**
**सुजनमनुसरन् वा दुर्जनेषु श्रयन् वा।**
**अनुदिनमनुसायं स्वापनोत्थानजाग्रत्-**
**सकलसमयमेकं त्वं तमीशं भजस्व ।।८७।।**

कहीं भी आते–जाते, निवास करते, निकलते, प्रवेश करते सुन्दर रमणीय अथवा दुर्जनों के स्थानों में रहते हुए भी प्रतिदिन सायं, प्रातः, सोते, उठते और जागते हुए सारे समय तक तुम केवल एकमात्र उसी परमेश्वर का ध्यान करो।।८७।।

**अहमिह मम सर्वं मत्सकाशोपपन्नं**
**गृहजनपरिवारैश्वर्यजातं मयाऽऽप्तम्।**
**इति मतिरपनेया दुःखमूलं ममत्वं**
**प्रभुविभववितानं ध्येयमेतत्समस्तम् ।।८८।।**

मैंने इस संसार में अपने समक्ष उपस्थित घर–परिवार परिजन आदि समस्त सुखसाधन सामग्री प्राप्त की है और यही सम्पूर्ण ऐश्वर्य है, इस प्रकार की बुद्धि त्याग दो, क्योंकि भौतिक वस्तुओं में 'यह मेरा है' इस प्रकार का ममत्व नाशवान् है। वह बिछुड़ने पर दुःख का कारण बनता है। वस्तुतः यह सर्वव्यापी सर्वभूतान्तरात्मा परामात्मा ही केवल ध्येय है।।८८।।

**निजकृतसुकृतेनोपार्जितं यत्सुकर्मा-**
**चरितरुचिरधर्मासादितं शाश्वतं सत्।**
**चरमपथनिविष्टं चित्परानन्दसृष्टं**
**परमपदविशिष्टं तत्सतामेकमिष्टम् ।।८९।।**

वास्तव में जो स्वयं किये गए सत्कर्म से प्राप्त, सुन्दर पुण्याचरण-पूर्ण धर्म से गृहीत, चिरन्तन सत्यस्वरूप, चरम पथ पर विद्यमान, सच्चिदानन्दघन पूर्ण परमात्म परमप्रभु हैं, वही सज्जनों के अभिलषणीय होते हैं।।८९।।

**इति सुमतिविकासि श्रेष्ठवाक्यप्रकाशि**
**श्रुतिमतपरिभाषि श्रीमुखोद्भासि मात्रा।**
**मधुमधुरिमसूक्तं प्रेमपीयूषसिक्तं**
**प्रतिदिशमिह देशे देशिकेषूपदिष्टम् ।।९०।।**

इस प्रकार श्रीमाता आनन्दमयी के द्वारा सुमति को विकसित करने वाले, श्रेष्ठ वाक्यों से प्रकाशित, वैदिक मत से परिभाषित, प्रेम-सुधा से सिञ्चित मधुमय सुन्दर उक्ति अपने श्रीमुख से उद्भासित किया गया। प्रत्येक दिशा में, इस देश में अपने समस्त भक्तजनों को श्रीमाता ने मधुरिम उपदेश दिये।।९०।।

**विविधविषयविज्ञा येऽपि शास्त्रार्थसार्था-**
**ध्ययनविशदबोधोद्बुद्धविद्यावदाताः।**
**प्रसभहृतमनस्कास्ते बुधा ज्ञानमानं**
**हृदि गलदभिमानं मातुरग्रे व्यमुञ्चन् ।।९१।।**

अनेक विषयों में पारङ्गत, शास्त्रों के अर्थज्ञानपूर्वक विशाल अध्ययन बोध से उद्बुद्ध विद्या से परिपूर्ण विद्वान् गण भी बलपूर्वक, श्री माता के प्रति आकृष्ट चित्त वाले होकर नष्टाभिमान होते हुए उनके सामने अपने ज्ञानाभिमान को छोड़ दिये।।९१।।

तदमृतमयवाचां केचिदाचम्य तत्त्वा-
ञ्चितकतिपयबिन्दून् तुष्टिमन्तर्दधानाः।
शिशव इव जनन्याः स्नेहजस्तन्यपानो-
न्मुखविवृतमुखास्ते धन्यधन्या विरेजुः ।।९२।।

श्री माता की अमृतमय वाणी का आचमन करके, तत्त्वपूर्ण कुछ बिन्दुओं से आन्तर सन्तुष्टि प्राप्त करते हुए कुछ भक्तगण माता के शिशु की तरह प्रेमसिक्त स्तनपान के प्रति उन्मुख होकर आशापूर्ण दृष्टि से, खुले हुए मुखवाले वे सभी धन्य–धन्य होकर सुशोभित हुए।।९२।।

इत्थङ्कारमपारहार्दिककृपाकूपारपूराम्भसा
सिक्तान्तःकरणान् स्वभक्तनिकरानन्तःपरिष्कुर्वती।
साम्बाऽऽनन्दमयी स्वभावमुदिता सच्चिद्घनानन्दभृत्-
सत्यं तत्त्वपरं निगूहिततरं मूर्तं पुरोऽदर्शयत् ।।९३।।

इस प्रकार की अपार हार्दिक कृपा–पारावार की धारा के जल से सिञ्चित अन्तःकरणों वाले अपने भक्त समुदाय का आन्तर शोधन करती हुई स्वभाव से मोदपूर्णा उस माता आनन्दमयी ने तत्त्वपूर्ण एवं रहस्यमय सत्य को सबके समक्ष मूर्तरूप में प्रदर्शित किया।।९३।।

वङ्गादङ्ककलिङ्गगुर्जरमहाराष्ट्रोत्तरं मध्यराज-
स्थानोत्कलदक्षिणाञ्चलहिमाद्र्यन्तं विहारादिकम्।
राष्ट्रं भारतभूभवद्दिवमिदं भासोन्नयन्ती स्वयं
सेयं सञ्चरणैर्निजप्रवचनैरन्वग्रहीत्प्राणिनः ।।९४।।

वङ्गाल से आसाम, कलिङ्ग, गुजरात, महाराष्ट्र, उत्तरप्रदेश, मध्यप्रदेश, राजस्थान,उड़ीसा, दक्षिणी राज्यों, हिमालय से लेकर विहार आदि से समन्वित स्वर्गभूत भरतभूमि में भारत राष्ट्र को अपने प्रखर तेज से उन्नत करती हुई इस माता ने भ्रमण कर अपने प्रवचनों से सभी प्राणियों को अनुगृहीत कर दिया।।९४।।

काशी शम्भुपुरी परा सुरसरित्पुण्याम्बुपूरोद्धुरा
यत्रोपेत्य पुरा पुरारिरतनोद्वासं सपूर्णाम्बिकम्।
कैलासं सहिमालयं सुरपुरं विस्मृत्य यां काङ्क्षते
तामानन्दमयी महेश्वरकृपामासाद्य साऽशिश्रियत् ।।९५।।

पुण्य जलप्रवाह-परिपूर्णा देवनदी गङ्गा के कूल पर सुशोभित काशी, पुराकाल से पूर्णाम्बिका सहित शिव जी की निवासस्थली है। इस पुरी के समक्ष सहिमालय कैलास एवं देवनगरी को भी वह भूल जाते हैं और जिस काशी नगरी में निवास के अभिलाषी होते हैं उसको महेश्वर की कृपा प्राप्त कर के आनन्दमयी माता ने अपना आश्रय स्थान बनाया।।९५।।

स्वर्धाम्नोऽपि धुरी पुरीयमिति या श्रीसान्नपूर्णं शिवं
सानन्दावनिकानने समभजत्सानन्ददिव्यद्युतिः।
तत्रानन्दमयी स्वनाममहितावासं चिकित्सालयो-
द्यद्विद्यालयमद्वयं द्वयमिव प्रस्थापयामास सा।।९६।।

स्वर्ग धाम की धुरी जिस काशी पुरी ने सानन्द 'आनन्दकानन' में श्रीअन्नपूर्णा-पूर्ण शिव को सेवित किया वहीं आनन्द दिव्यद्युति वाली माता आनन्दमयी ने अपने नाम से अङ्कित एक चिकित्सालय एवं एक अद्वितीय विद्यालय को स्थापित किया।।९६।।

प्रत्यब्दोदितकुम्भपर्वणि शुभे सा तीर्थराजाञ्चले
पुण्याम्भस्त्रिसरित्तटान्तमभितो जाग्रत्प्रयागस्थले।
भूयो वासमुरीचकार सुकृताचारप्रचारोचितं
माताऽऽत्मीयपदानुरागिसुजनैः सार्द्धं समासावधि ।।९७।।

प्रत्येक वर्ष पड़ने वाले कुम्भ पर्व पर तीर्थराज के शुभ प्रान्तर में पुण्यनीरा गङ्गा, यमुना एवं अन्तःसलिला सरस्वती के पावन सङ्गम स्थल प्रयाग में सुकृताचरणप्रचारणपूर्वक पूरे एक मास तक श्री माता अपने चरणानुरागी भक्त जनों के साथ कल्पवास करती थीं।।९७।।

**यावन्तः समकालिकोद्भवमहात्मानो बुधा योगिनः**
**सन्तो वा शुचिसाधवः समभवन् सत्सङ्गतिस्तैः सह।**
**मात्राऽकारि तथाऽनया हृतहृदो जातप्रभावा इमे**
**देवीमैक्यमतोदयादभिमतां तामन्वमन्यन्त ते ।।९८।।**

जितने भी समकालिक महात्मा, विद्वान्, योगी, सन्त एवं साधु साधक हुए उनके साथा माता ने सत्सङ्गति की तथा इनके द्वारा आकृष्ट चित्त वाले एवं इनसे प्रभावित इन सभी लोगों ने एक स्वर से इन्हें देवी का सम्मान प्रदान किया।।९८।।

**काश्यां श्रीकरपात्रपादयतिराड्यज्ञे निजाभ्यागमा-**
**त्तद्वाचोग्रहणाच्च यागविधिनाऽग्निस्पर्शनादात्मना।**
**श्रीमाता तमतोषयद् यतिवरं सोऽमोदयत्तामसौ**
**सङ्गः प्रीतिजुषोस्तयोः सुमनसोरन्तर्दृशोः कोऽप्यभूत् ।।९९।।**

काशी में श्री करपात्री जी महाराज के निवेदन पर श्री माता उनके यज्ञ में सम्मिलित हुईं और यज्ञविधानपूर्वक अपने अग्निस्पर्श से यतिश्रेष्ठ स्वामी जी को सन्तुष्ट कर दिया। साथ ही साथ स्वामी जी महाराज ने भी हृष्टचित्त होकर श्री माता आनन्दमयी को आनन्दित किया। स्नेहसिक्त, सुमनस्क एवं आन्तरिक दृष्टि वाले इन दोनों का समागम बड़ा ही मनोरम तथा अद्वितीय था।।९९।।

**सम्मान्यः स महामना हरभुवः श्रीमालवीयोऽभवद्**
**भूतिः कोऽपि यतिर्यथा गुरुमतिस्तद्वासभूमिङ्गता।**
**श्रीमाता समुदारहृद्गतलसत्सत्कारकालोचिता-**
**लापैर्मोदमवाप तेन विबुधोत्तंसेन सम्भाविता ।।१००।।**

काशी की धरती की विभूति, साधकवर, गुरुमति, सम्माननीय श्री महामना मदनमोहन मालवीय जी अद्वितीय महात्मा थे। एक वार श्रीमाता उनके निवास पर गईं। विद्वद्वर श्री मालवीय जी ने उदारचित्तपूर्ण शोभित योग्य सत्कारपूर्वक वार्तालाप से उन्हें सम्मानित किया, जिससे वे अतिप्रमुदित हुईं।।१००।।

**अत्राभूत्कविराजराजितनिजोपाधिप्रसिद्धिङ्गतो**
**गोपीनाथसुधीः सयोगविकसत्तन्त्रागमान्तःप्रधीः।**
**श्रीमातुश्चरणोपलब्धशरणो भूयोदयाभाजनी-**
**भूयोवास तदन्तिकेऽन्तिमवयस्यन्त्याश्रमे योगिवत् ।।१०१।।**

यहीं काशी नगरी में ही सुशोभित 'कविराज' इस उपाधि से प्रख्यात पण्डित श्री गोपीनाथ कविराज तन्त्र, आगम एवं योगशास्त्र के पारङ्गत विद्वान् हुए। श्री माता के चरणों में प्राप्त शरण वाले उनके समीप में वारम्वार दया का पात्र होकर अन्तिम अवस्था में आनन्दमयी माँ के पास योगिवत् निवास किया।।१०१।।

**'अल्मोड़ा'-नगरे नगाञ्चलमहीमुह्यन्महीयोयशो-**
**दात्री काऽपि बभूव साधनरता साध्वी यशोदाऽभिधा।**
**श्रीमाता परमातरं सपदि तां सम्प्रेक्ष्य भावोल्लसद्-**
**हृत्प्रेमातिशयेन चिद्रुतपरानन्दं पराविन्दत ।।१०२।।**

अल्मोड़ा जनपद में उत्तराञ्चल की धरती को मोहित करती हुई महान् यश की प्रदात्री, साधनारत अनिर्वचनीय कोई साध्वी यशोदा नाम वाली हुई। श्री माता ने उस परमाता को देखकर भावों से उल्लसित प्रेमातिशय के कारण चिद्रुत परमानन्द को प्राप्त किया।।१०२।।

**राष्ट्रे राष्ट्रपितेतिमानमहितो गान्धी महानायको**
**मात्राकृष्टमनाः समानयदिमां संवर्धिवर्धाश्रमे।**
**अत्रावासमुरीकरोतु भवतीत्युक्ते महात्मन्यसौ**
**श्रीमाता तमबोधयद् 'भवदभिन्नाऽहं सदा तेऽन्तिके'।।१०३।।**

भारत राष्ट्र में राष्ट्रपिता सम्मान से विभूषित महानायक महात्मा गॉन्धी जी भी श्री माता से आकृष्ट होकर इन्हें सुन्दर वर्धा आश्रम में ले आये। जब श्री गाँधी जी ने कहा–आप यहाँ पर रहना स्वीकार कर लें। तब श्रीमाता ने उनको बताया–मैं आपसे अभिन्न रूप में रहते हुए सदैव आपके समीप में हूँ।।१०३।।

**स्थानात्स्थानपरं पुरात्परपुरं प्राप्तप्रकृष्टादरं**
**गच्छन्ती सुतपःप्रसूतसुकृताकारं महो बिभ्रती।**
**माताऽऽन्दमयी मनोज्ञवचसा वक्त्रोल्लसद्वर्चसा**
**स्नेहोन्मीलितचेतसा च निखिलान् लोकान् समावर्जयत् ।।१०४।।**

एक स्थान से दूसरे स्थान पर विभिन्न नगरों में पर्याप्त सम्मान प्राप्त करती हुई, सुन्दर तपश्चरणोत्पन्न पुण्यस्वरूप तेज से समन्वित श्री माता आनन्दमयी ने अपने मुख के आभामण्डल से, मनोज्ञ-वाणी से तथा स्नेह सिक्त चित्त से समस्त सज्जनों को आकर्षित कर लिया।।१०४।।

**श्रीमातुर्वदनारविन्दमधुरप्रस्यन्दिसौरभ्यभृत्-**
**कारुण्यामृतसिक्तसुस्मितमधुस्रोतोऽन्तरामज्जनात्।**
**दीव्यन्निर्जरनन्दिनन्दनवनेऽपीन्दिन्दिराः सज्जना**
**रज्यन्मानसनन्दिनो विदधिरे प्रेप्सां न सौख्येप्सवः ।।१०५।।**

श्री माता के मुखारविन्द से मधुर प्रस्यन्दी सुगन्धित करुणा के अमृत से सिञ्चित मन्दहास्य की मधुधारा के भीतर स्नान कर लेने के कारण अनुरक्त हृदय से आनन्दित सुखाभिलाषी सज्जनों ने दिव्य देवों को आनन्दप्रद नन्दन कानन में भृङ्गायमाण होकर भी लिप्सा नहीं धारण की।वस्तुतः श्री माता के समक्ष नन्दन कानन उन्हें तुच्छ प्रतीत होता था।।१०५।।

**वाराणस्यामुपास्तिप्रतिकृतिविमलज्योतिरास्तिक्यसूक्ति-**
**प्रस्यूतिः श्रौतमूर्तिः श्रुतसकलजगन्मण्डलव्याप्तकीर्तिः।**
**आनन्दस्यन्दमानोल्लसितचितितटीप्रान्तदेवापगेवा-**
**भान्ती साऽऽनन्दभूमिः समजनि भुवने दैवतं लोकमाता ।।१०६।।**

वाराणसी में विद्यमान उपासना की प्रतिकृति (चित्र) से निःसृत निर्मल ज्योति की आस्तिक्य सूक्ति रूप में उद्भूत, वेद वाङ्मय की मूर्ति, विश्रुत समस्त जगत् में व्याप्त कीर्तिवाली, आनन्द की बहती हुई धारा में देदीप्यमान चेतना के तटप्रान्त की देवनदी (गङ्गा) के समान सुशोभित आनन्द की भूमि वह लोकमाता इस जगत् में देवतास्वरूप आविर्भूत हुई।।१०६।।

**भूमोच्चैरध्वरोत्थैस्त्रिदिवपुरमिवोद्भास्य धूमोच्चयैः सा**
**व्योमान्तर्भासमानैः स्मरहरनगरं भास्वरं भूसुरेन्द्रैः।**
**भूयो भूयोगिभूषामणिरिव विलसद्भूमिभूषायमाणा**
**लोकानालोक्य लोकार्चितपदकमलाऽऽनन्दमाता तिरोऽभूत् ।।१०७।।**

ऊँचे–ऊँचे प्रचुरतम यज्ञ से उठने वाले, आकाशमण्डल में व्याप्त हो जाने वाले, धूम समूह से देदीप्यमान, परमशिव की नगरी काशी को श्रेष्ठ ब्राह्मणों के साथ प्रकाशित करके, वारम्वार धरती पर विद्यमान योगिओं में अलङ्कारमणि के समान, विलसित होती हुई भूमि को अलङ्कृत करती हुई, लोगों का पथप्रदर्शन करके लोकवन्दित चरणकमला वह आनन्दमयी माता तिरोहित हो गई।।१०७।।

**केचित्सञ्जायमाना जगति धनजनाद्यर्जने लग्नचित्ता**
**अन्ये सम्यग् गुणाप्तौ प्रणिहितमतयः कीर्तिलब्धौ परे वा।**
**केऽप्येते साधनान्तर्नियमितमनसो जीवनानन्दसिन्धौ**
**सानन्दं गाहमाना परमपदमुदाऽऽनन्दमातुः समानाः ।।१०८।।**

संसार में विद्यमान रहने वाले कुछ प्राणी धनसम्पत्ति के उपार्जन में आसक्तचित्त वाले होते हैं, तो कुछ भलीभाँति गुणार्जन में दत्तचित्त और दूसरे जन यशःप्राप्ति के अभिलाषी होते हैं; किन्तु कुछ लोग ऐसे भी हैं जो साधना के अन्तर्गत नियमितमानस होकर जीवन के आनन्द-सिन्धु में सानन्द अवगाहन करते हुए श्री माता आनन्दमयी के समान महिमा-मण्डित होते हैं।।१०८।।

## ।। आनन्दाष्टकम् ।।

**सानन्दमानन्दमयि ! त्वमारात्**
**कारुण्यवारान्निधिसन्निधानात्।**
**स्नेहस्रवत्पूरमपूर्वमुद्यद्-**
**हृद्यं दयावारि दृशाऽभिसिञ्च ।।१।।**

हे माता आनन्दमयी! तुम मुझमें, करुणासागर की समीपता से, गिरते हुए स्नेह धार वाले, अपूर्व, उदीयमान हृद्य दयावारि को दृष्टिपात द्वारा सींचो।।१।।

आनन्दकन्दोद्गतसाधनाम्भः-
सिक्तोदितामन्दसुरद्रुवल्ली।
सानन्दमानन्दमयीतिनाम्ना
लोकाश्रयाऽमोघफलं प्रसूते ।।२।।

आनन्द की कन्दली से उद्भूत, साधना रूपी जल से सिञ्चित, निकली हुई विकसित देववृक्ष की लता, आनन्दपूर्वक 'आनन्दमयी' इस नाम से संसार का आश्रय होकर अमोघ फल उत्पन्न करती है।।२।।

आनन्दसम्भूतसुधाब्धिमध्यात्
सञ्जातपूर्णप्रसरत्प्रकाशा।
सेव्या सदानन्दसुधांशुशुभ्राऽऽ-
नन्दप्रदाऽऽनन्दमयी कला सा ।।३।।

आनन्द से उत्पन्न सुधासागर के मध्य से , पूर्ण प्रसरणशील प्रकाश वाली, सदैव आनन्द देने वाली, आनन्दचन्द्र की धवल कला, वह आनन्दमयी निरन्तर सेवनीय है।।३।।

आनन्दपूर्वाद्रिशिरोऽवभासी
भास्वद्विभानन्दसुखैकराशिः।
सानन्दमग्रार्घ्यसहस्त्ररश्मिः
साऽऽनन्दमूर्तिर्जननी प्रणम्या ।।४।।

आनन्दपूर्ण पूर्व दिशा में उदयपर्वतशिखर पर भासमान, देदीप्यमान प्रभा से आनन्द और सुख की अनुपम राशि, आनन्दपूर्वक अग्रिम पूज्य सहस्त्ररश्मि (सूर्य), आनन्द की मूर्ति वह माता आनन्दमयी वारम्वार प्रणाम के योग्य हैं।।४।।

आनन्दचिद्ब्रह्मपरात्मशक्ति-
रानन्दवृत्तिप्रतिभासमाना।
साकारमानन्दवपुर्दधाना
साऽऽनन्दमाता विबुधैरुपास्या ।।५।।

आनन्द के चिद्ब्रह्म की परात्म शक्ति, आनन्दपूर्ण व्यवहार से प्रतिभासित होती हुई, साकार आनन्दशरीर को धारण करने वाली वह आनन्दमयी माँ विद्वानों के द्वारा उपास्य (पूजनीय) है।।५।।

**आनन्दपाथोधितरङ्गसङ्गा-**
**दानन्दपूरप्रसरं सिसृक्षुः।**
**दिक्षु स्रवत्स्वच्छदयाम्बुबिन्दुः**
**साऽऽनन्दसिन्धुः सुजनैर्निषेव्या ।।६।।**

आनन्दसमुद्र के तरङ्गों के संसर्ग से, आनन्दप्रवाह के प्रसार की सृजनाभिलाषिणी सारी दिशाओं में गिरते हुए निर्मल दया की जल बिन्दुओं वाली वह आनन्द की सरिता, सज्जनों के द्वारा सेवनीय है।।६।।

**आनन्दकाव्यध्वनिलक्षणाध्व-**
**शब्दार्थसालङ्कृतिसद्गुणाढ्या।**
**सानन्दमास्वाद्यरसप्रशस्या**
**साऽऽनन्दसंवित्कविवृन्दवन्द्या ।।७।।**

आनन्दपूर्ण काव्य के ध्वनि लक्षण मार्ग पर अथवा 'आनन्दवर्धन' वर्णित काव्यात्मा ध्वनिलक्षण मार्ग शब्दार्थ, अलङ्कार एवं गुणों से परिपूर्ण (कविता को) आनन्दपूर्वक आस्वादित करके, रसों से प्रशंसनीय वह आनन्द की संवित् (संवेदना) कविवृन्द के द्वारा वन्दनीय है।।७।।

**आनन्दसौन्दर्यलहर्यमोघा-**
**नन्दच्छटाऽऽनन्दघना चिदेका।**
**आनन्दकान्तारजुषां समेषां**
**सानन्दमानन्दमयी पराम्बा ।।८।।**

आनन्द सौन्दर्य की लहरी, अमोघ आनन्द की छटा, सघन आनन्द वाली अद्वितीय चैतन्यस्वरूपिणी आनन्दवन के निवासी समस्त जनों को वह पराम्बा आनन्दमयी आनन्दित कर देने वाली है।।८।।

**मुदाधीतमिदं सद्भिर्हृदाऽऽनन्दाष्टकं शुभम्।**
**सदाऽऽनन्दमयीमातुः प्रसादाय प्रकल्पते ।।९।।**

सज्जनों के द्वारा मोदपूर्ण हृदय से पठित यह शुभप्रद आनन्दाष्टक, निरन्तर श्री माता आनन्दमयी के प्रसाद (प्रसन्नता) के लिये अनुकूल होता है।।९।।

**आनन्दजाष्टकमथाष्टकपद्यबद्धं**
**काशीस्थितेन कविना शिवजीतिनाम्ना।**
**हृद्यप्रणीतशतकान्तसुमाञ्जलीव**
**सानन्दमातृचरणार्पितमाविभातु ।।१०।।**

हृद्य (सुन्दर) प्रणीत शतक के सुमनों की अञ्जलि की भाँति, काशीस्थित कवि शिव जी के द्वारा रचित अष्ट पद्यबद्ध यह आनन्द-जाष्टक आनन्दपूर्वक श्री माता के चरणों में अर्पित होकर सुशोभित हो।।१०।।

**।। इति पूर्णमिदं सानन्दाष्टकमानन्दशतकम् ।।**

# श्रीकुम्भशतकम्

**बाभाति द्वादशाब्दोद्गतमतिमहितं पर्व कुम्भाभिधानं**
**सर्वश्रद्धानिधानं मकरमनुगतेऽपूर्वयोगेन भानौ।**
**स्नानोदात्तात्मचित्तप्रणयपरिणतं पुण्यपुञ्जं दधानं**
**जीवन्मुक्तिप्रदानं शुचिरुचिजनकं प्राणिनामास्तिकानाम् ।।१।।**

आस्तिक जनों का पवित्र रुचिदायक, जीवन्मुक्ति प्रदान करने वाला, स्नान करने से उदात्त चित्त में स्नेह प्रदान करने वाला, सम्पूर्ण लोगों के श्रद्धा का केन्द्रबिन्दु, अत्यन्त पूजनीय, मकरराशिस्थ सूर्य होने पर बारह वर्षों बाद पुनः समागत महाकुम्भ का पर्व सुशोभित हो रहा है।।१।।

**आख्यानं यच्च नानाविधमनुविदितं तत्र पौराणिकं त-**
**न्मन्थानोन्मन्थनोत्थाम्बुनिधिगतसुधाकुम्भवृत्तानुविद्धम्।**
**देवानां दानवानां समरसमरसद्योतनाद्यत्तदेतत्**
**पीयूषं सामरत्वोन्नतपरमपदप्रापकं प्रापदुच्चैः।।२।।**

जो महाकुम्भ पर्व अनेक प्रकार की पौराणिक, उस मन्दराचल की मथानी से मथे गये समुद्र से निकले अमृत से पूर्ण कुम्भ (घड़े) की कथा से जुड़ा हुआ है और जो देवों और दानवों के युद्ध की स्मृति दिलाने वाला है तथा जिसमें प्राप्त होने वाला अमृत अमरता के श्रेष्ठ पद को प्राप्त कराने वाला है, वही कुम्भ पर्व फिर आ गया है।।२।।

**पुण्यक्षेत्रे प्रयागे सरिदमलजले सङ्गमे यत् त्रिवेणी-**
**तीर्थे चाकण्ठपूर्णेऽम्बुनि यदनुदिनं मज्जनं साम्बुपानम्।**
**मर्त्यानां मर्त्यभावं परिहरति नृणां यच्छदेकान्तमुक्ते-**
**रन्तर्मोदामृतत्वं त्रिभुवनविभवोत्कृष्टमिष्टं फलं तत् ।।३।।**

पुण्यक्षेत्र प्रयाग में (गङ्गा, यमुना, सरस्वती) नदियों के सङ्गम पर त्रिवेणीतीर्थ में, आकण्ठ जल में जो प्रतिदिन (महीने भर) स्नान और जलपान होता है वह मनुष्यों के मर्त्यभाव का विनाश करता है साथ ही एकान्तमुक्ति के आन्तरिक हर्ष के अमृतत्व एवं त्रिभुवन के वैभव के उत्कृष्ट अभीष्ट फल को भी प्रदान करता है। वह कुम्भ पर्व पुनः उपस्थित है।।४।।

**नासिक्ये सोज्जयिन्यामनुपदमुदयद् यद् हरिद्वारपुर्यां**
**कुम्भाख्याम्भोऽमृतं तल्लसदमितपरानन्दसन्दोहपूर्णम्।**
**पुञ्जीभूय प्रयागे प्रथयति परितोऽपूर्वपर्वप्रकर्षं**
**लोकोत्कर्षप्रहर्षप्रदममरपदं सन्ददत्सज्जनेभ्यः ।।४।।**

जो नासिक, उज्जयिनी सहित हरिद्वार पुरी में क्रमशः प्रकट होता हुआ कुम्भनामक अमृत है वह उल्लसित परमानन्दसमूह से पूर्ण है। वही बारह वर्षों पर प्रयाग में पुञ्जीभूत होकर चारों ओर अपूर्व प्रकर्ष लोकोल्लास-प्रदायी है एवं सज्जनों को अपरपद को प्रदान करने वाला है। वह कुम्भपर्व पुनः समापन्न है।।४।।

**धर्मोत्थानप्रधानाः पृथगपि विविधाः सम्प्रदायाश्च मार्गाः**
**आचार्याः साधवस्ते युगपदिह शुभे सङ्गमे सङ्गमाप्ताः।**
**हित्वा भेदाँश्च वादान् ननु समनुगतास्तुष्टिमन्योन्यमत्र**
**प्राप्यैक्यं दर्शयन्तः श्रुतिसुखदमुदं सङ्घबद्धा लभन्ते ।।५।।**

धर्म के उत्थान में प्रधान रूप से भूमिका निभाने वाले पृथक्-पृथक् अनेक सम्प्रदायों के अनुयायी आचार्य एवं साधु लोग पवित्र सङ्गम पर एकत्र होकर और परस्पर साथ रहकर सारे भेद-भावों को छोड़कर यहाँ सन्तोष का अनुभव करते हुए, एकता को प्रदर्शित करते हुए कर्णसुखकर आनन्द को सङ्घबद्ध होकर प्राप्त करते हैं।।५।।

**तीर्थेषु सार्थकसमन्वितमुक्तिदान-**
**स्थानप्रधानमहिमानमयं दधानः।**
**शश्वत्सरित्त्रितयसङ्गमतस्त्रिवेणी-**
**पुण्याभिषेकमहितो जयति प्रयागः ।।६।।**

यह प्रयाग तीर्थों में सार्थकतायुक्त मोक्ष प्रदान करने के स्थान की प्रधान महिमा को धारण करता हुआ निरन्तर तीनों नदियों के सम्मिलन की उस त्रिवेणी के पुण्यमय अभिषेक से पूजनीय होकर (इस लोक में) सर्वश्रेष्ठ है।।६।।

**यागात्प्रकर्षमधिगम्य सुरम्यभागा-**
**दागत्य सोऽयमिह भारतमध्यवर्ती।**
**वैकुण्ठपावनपुरीयति कुम्भपर्वो-**
**त्कर्षाद् ददद् धवलमोक्षफलं प्रयागः।।७।।**

यह प्रयाग यज्ञ से श्रेष्ठता को प्राप्त करके सुरम्य भाग से आकर इस संसार में भारतवर्ष के मध्यभाग में स्थित होता हुआ कुम्भ पर्व के उत्कर्ष से उज्ज्वल मोक्षफल को देता हुआ विष्णु की पावन पुरी (स्वर्ग) का आचरण कर रहा है।।७।।

**निर्मथ्य नीरधिमशेषतया विशेषाद्**
**देवासुरा ननु पुराऽमृतमाप्तुकामाः।**
**पीयूषपूरपरिपूरितकुम्भमम्भो-**
**निध्युद्गतं सकलहं स्वकरैश्चकर्षुः ।।८।।**

विशेषरूप से (नागराज की रस्सी तथा मन्दराचल की मथानी बना कर) देव तथा असुर ने पूर्व काल में सम्पूर्ण रूप से समुद्र को मथकर अमृत से परिपूर्ण समुद्र से निकले हुए कुम्भ को कलह करते हुए अपने हाथों से खीचा।।८।।

**जाते महत्यतिभये च सुरासुराणां**
**द्वन्द्वोत्थसङ्गरभरे किल सागरान्ते।**
**आदाय कुम्भममृतस्य दिवि द्रुतास्ते**
**तेनात्र पेतुरवनौ सुकणाः सुधायाः ।।९।।**

सागर के तट पर देवों और दानवों का द्वन्द्वोत्थ समर हो जाने पर वे अमृतकुम्भ को लेकर स्वर्ग में भाग गये। इस (छीना-झपटी में) यहाँ पृथ्वी पर अमृत के कुछ उत्तम कण गिर पड़े।।९।।

**सिन्धूत्थितामृतघटोत्पतदच्छबिन्दु-**
**स्थानेषु तेषु महितेषु महीतलेऽस्मिन्।**
**माहात्म्यमण्डितमनुत्तमपत्तनं तत्-**
**तीर्थेशतां प्रतनुते प्रथमः प्रयागः ।।१०।।**

